॥ श्रीः ॥



# माधवमुखभङ्गः ।




वाराणसेय राजकीयसंस्कृतप्रधानपाठशाला- न्यायशास्त्रा-
ध्यापक न्यायव्याकरणाचार्य श्रीसूर्यनारायणशर्म
शुक्ल विरचितः ।



काशीस्थ बेकानेरमहाराजमन्दिरस्थ स्वामि श्रीशिवानन्द-
पुरि महाराजप्रकाशितः ।



ह० व० पावगी द्वारा

[illegible] मुद्रितः ।

॥ श्रीः ॥

# माध्वमुखभङ्गः ।





वाराणसेय राजकीयसंस्कृतप्रधानपाठशाला न्यायशास्त्रा-

ध्यापक न्यायव्याकरणाचार्य श्रीसूर्यनारायणशर्म

[illegible] विरचितः ।



काशीस्थ बेकानेरमहाराजमन्दिरस्थ स्वामि श्री[illegible]-

पुरि महाराजप्रकाशितः ।





कृ० व० पावगी द्वारा

काश्यां रामघट्टे हितचिन्तकाभिधे मुद्रणालये मुद्रितः ।

| | | |
|---|---|---|
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |
| | | |

काशीमागत्य कियता कालेनाद्वैतसिद्धान्तं स्वयमजानन्नपि ग्रन्थानां कियन्त्यक्षराण्यन्यथा योजयन् स्वबुद्धिमान्द्यपरिचयं ददानोऽद्वैतसिद्धान्तमाक्षिपति । कपटमृगस्यास्य छद्मना साधारणजनानां बुद्धिव्यामोहो माभूदेतस्मात्कारणादस्मत्परमपूज्यानां सद्धर्मरक्षापराणां, काशीविद्वन्मण्डलाऽभिमतानां, पण्डितप्रकाण्डानां श्रीसूर्य्यनारायण

ॐ

# प्रस्तावना ।

'सूर्यनारायणं वंदे मोहध्वान्तनिवारकम् ।
द्वैतिनः कौशिका मूका, यद्वाचा तिग्मरश्मिना ॥'

अथ नास्त्यविदितमिदं प्रेक्षावतां यदास्माकीनस्य भारतवर्षस्यातिशयेनानुन्नतिहेतुभूता बहुकपोलकल्पिताः पन्थानः सन्ति । एतेषामाधिक्यमेव जनसंसदि परस्परं विद्वेषकारणम् । समये समये भगवान् भूतभावनोऽप्यवतरति रक्षणाय तैराप्लावितवैदिकसिद्धान्तानां, प्रोन्मूलनाय च कुपथगामिनामिति इत्यपि विज्ञाततरमेव, यद्भगवत इन्दुमौलेरवतारभूतैरार्यमर्यादाधुरंधरैर्वैदिकवर्णधर्मरक्षापरैः श्रीमद्भगवत्पादशङ्कराचार्यैः प्रयत्नेन सम्यगुज्जासिता अपि, पाखण्डव्रतदीक्षापरा, अद्वैतवैदिकसिद्धान्तविरोधिनः, 'स्वकुमतिकर्दमकलुषितहृदयाः शिवद्वेषिणो,वेदप्रतिपादितभस्मरुद्राक्षनिन्दाव्रताविरतनिरता, मुग्धमानवप्रतारणपरायणाः स्ववाग्वागुराभिर्द्रव्यव्ययादिभिश्चाल्पशेमुषीकाञ्जनान् स्वायत्तीकृत्य वेदविरुद्धस्वमतसम्वर्धनपरा नाममात्रेण जगतीतले स्थिता अपि समयं प्राप्य कोलाहलं कुर्वन्ति । चेष्टन्ते चाहर्निशं वैदिकमार्गात्प्रविचालनाय मुग्धमनुष्यान् ! अस्ति चैवंभूतः,केवलं वञ्चनावलो माध्वमतानुयायी, सत्यध्याननामा, स काशीमागत्य कियता कालेनाद्वैतसिद्धान्तं स्वयमजानन्नपि ग्रन्थानां कियन्त्यक्षराण्यन्यथा योजयन् स्वबुद्धिमान्द्यपरिचयं ददानोऽद्वैतसिद्धान्तमाक्षिपति । कपटमृगस्यास्य छद्मना साधारणजनानां बुद्धिव्यामोहो माभूदेतस्मात्कारणादस्मत्परमपूज्यानां सद्धर्मरक्षापराणां, काशीविद्वन्मण्डलाऽभिमतानां, पण्डितप्रकाण्डानां श्रीसूर्य्यनारायण

शुक्लमहोदयानां विगतक्लमो यत्नो माध्वमुखमुद्रणायोज्जृम्भते ।
यद्यपि वैदिकसिद्धान्ते न हि कस्यचित्काप्याक्षेपो युक्तस्तथापि 'यथाविधं यं विषयं निजस्य प्रश्नस्य निर्वक्ति परो ययोक्त्या, वाच्यस्तथैवोत्तरवादिनाऽपि तयैव वाचा स तथाविधोऽर्थः' इति न्यायमनुसृत्यानुभवतु नाम ज्ञानलवदुर्विदग्धः सत्यध्याननामा माध्वः सुप्तसिंहोत्थापनजन्यां स्वीयां दुर्गतिमिति ।

माध्व ? ज्योतिष्टोमशब्दे ज्योतिषां स्तोम इति विग्रहस्तत्त्वप्रकाशिकायां प्रदर्शितोऽसाधुरिति श्रीमीमांसाकेशरिवेदविशारदश्रीपण्डितचिन्नस्वामिशास्त्रिभिरुक्ते तत्समर्थयितुमशक्तेन त्वया तत्त्वप्रकाशिकायां नास्तीति प्रलपितम् तत्ते महती स्वसंप्रदायाभिज्ञता ब्र० १।४।१० तत्त्वप्रकाशिकायां दर्शनात् ।

विदुषां कश्चित्—

न्यायशास्त्रिसाहित्यवेदान्ताचार्यो ब्रह्मचारि

रामलक्ष्मणचैतन्यः ।

श्री विश्वेश्वरः शरणम् ।

# माध्वमुखभङ्गः ।

हरिहरपदाभिधेयः कश्चन देवः सदा जयति ।
भक्तमनोरथपूर्तिः करुणामूर्तिः श्रुतेर्धाम ॥
नुमो नृहरिकोपाग्निदह्यमानजगत्त्रयम् ।
रक्षन्तं नृहरिं हत्वा * शङ्करं शरभेश्वरम् ॥
आराध्य भगवत्पादश्रीशङ्करपदाम्बुजम् ।
क्रियते माध्वबोधाय * माध्वीयमुखभञ्जनम् ॥

## प्रयोजनम् ।

माध्वसंप्रदायाचार्यश्रीसत्यध्यानतीर्थमुनीन्द्रेण नारायणाचार्य-द्वाराप्रकाशितस्य 'अद्वैतविमर्शस्य' मया 'माध्वभ्रान्तिनिरास' पुस्तकेन निराकरणे कृते तेनैव श्रीसत्यध्यानतीर्थमुनीन्द्रेण स्वकीयान्तेवासिनृसिंहाचार्यद्वारा 'अद्वैतभ्रान्तिप्रकाश' पुस्तकं संपाद्य काश्यां वितीर्णम् । यत्र च केवलमन्यपराणि पुराणवचनान्युपन्यस्य भस्मरुद्राक्षधारणस्य श्रीलक्ष्मीरमणेनापि समर्चितपादयुगलस्य भगवतो हरस्यच निन्दनमेवानेन नृपशुना समाचरितम् ।

यद्यपि नवीनश्रुतिस्मृतिकल्पनाजन्यपापाल्लेशतोऽप्यभीतस्य मध्वस्य मतमत्यन्तमनादेयत्वेन जगति प्रथितमेव तथापि ऋजुदृशः केचिदस्य वाग्जालेन भ्रान्ता मा भूवन्निति तत्प्रतिविधानाय मामकीनः प्रयासः ।

---

टि० * नृसिंहावतारे भगवतः कोपानलेन पीडिता देवाः शङ्करं शरणमुपगत्याब्रुवन् भगवन् नृसिंहोत्थात्कोपानलात्पाहीति । ततः शङ्करेण नृसिंहसान्त्वनाय वीरभद्रः प्रेषितः परन्तु नृसिंहः तदीयसान्त्वनां न स्वीकृतवान् इति क्रुद्धः शङ्करः शरभावतारं धृत्वा पक्षाभ्यां नृसिंहं निहत्य तदीयं चर्म पर्यधत्त । ततः प्रभृति शङ्करः कृत्तिवासा इत्यभिधीयते इति पौराणिकी कथा शिवपुराणान्तर्गतशतरुद्रीयसंहितायां १०-११ १२ अध्याये द्रष्टव्या । * इदमद्वैतिरसनाकर्तरीतिमाध्वोक्तेरुत्तरम् ।

# पाद्मपुराणोत्तरखण्डसमीक्षा

यत्तु—

दैत्यानां मोहनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ॥

इत्यादीनामुत्तरखण्डीयानामद्वैतवादनिन्दापरत्वमिति तदसत्, नग्ननीलपटादिकमित्यत्र मायावादमसच्छास्त्रमित्यस्य संबन्धात् विष्णुप्रवर्तितत्वावगमाच्च मायावादपदं * बौद्धस्यैव मतविशेषं विषयीकरोति, न ब्रह्मवादम् । किंच 'प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकमित्यादिना स्वकृतं शास्त्रं संकीर्त्य विष्णुकृतशास्त्रनिरूपणप्रस्तावे पुनः स्वकृतशास्त्रवर्णनस्य प्रकृतसंदर्भविरुद्धत्वं स्यात् । भामत्यादौ मायाशब्दप्रयोगादद्वैतिनो मायावादिनः इति कथनं तु 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति' गीतायां मायाशब्दप्रयोगाद् गीताकर्तुरीश्वरस्य मायावादित्वापादकतया हेयम् । किंच नीलपटादिकमिति पदं नीलपटनीलचन्दनादिधारिणो माध्वान् कथं न विषयीकरोतीति स्वशस्त्रेण स्वशिरश्छेदन्यायापातः । किंच आनन्दाश्रममुद्रितपद्मपुराणटिप्पण्यामेषां वचनानां ( क, ज, ञ, फ, ) पुस्तकस्थत्वकथनात्काचित्कत्वेन प्रक्षिप्तत्वम् । यच्च पद्मपुराणप्रकाशको वञ्चकः इति कथनं तत्तु निरङ्कुशत्वात्ते तुण्डस्य यदीच्छसि तद् ब्रूहि प्रकाशका हि मातृकापुस्तकात्किंचिदप्यन्यथा कर्तुं न प्रभवन्तीति प्रकाशकसमयः ।

वस्तुतस्तु पातालखण्डे भस्मधारणावश्यकत्वस्य शिवपरत्वस्य च वर्णनादिह उत्तरखण्डे च तन्निन्दनस्य करणात्पूर्वापरविरोधेनोत्तरखण्डस्य शिवद्रोहिप्रक्षिप्तत्वमेवावगन्तव्यम् ।

---

* ज्ञानसंहितायां २१ अध्याये—

असृजच्च महातेजाः पुरुषं स्वात्मसंभवम् ।
मायिमायामयं तेषां धर्मविघ्नार्थमच्युतः ॥
विष्णुरुवाच—मायिन्मायामयं शास्त्रं षोडशाख्यसहस्रकम् ।
श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम् ॥
एतच्छास्त्रं त्वया ग्राह्यं विस्तारं तद्गमिष्यति ।
पाखण्डः स्थापितस्तेन विष्णुना विश्वयोनिना ।

# मध्वपरिचयदानप्रयोजनम् ।

सौरमात्स्यकौर्मस्कान्दपुराणसंप्रदायप्रदीपमध्वविजयादिग्रन्थेभ्यः 'मध्वाचार्यः पूर्वमद्वैती सन् द्वैती बभूव शिवनिन्दकश्चार्वाकश्च' इति यदवगतं तदेव मया 'माध्वभ्रान्तिनिरासे' लिखितमिति कोऽयमस्थाने ते क्षोभावसरः ।

यच्च मध्वपरिचयदानं व्यर्थं यतः वादिप्रतिवादिसम्मतैः प्रमाणैरेव प्रमेयव्यवस्थितिः न तु स्वकीयाचार्यप्रशंसनेन परकीयाचार्यनिन्दनेन वेति वदसि तत्साधु मध्वपरिचयचिकित्सया प्रकृतिमुपगतोऽसि यतः पूर्वं त्वयैवाद्वैतविमर्शे भगवत्पादः शङ्कराचार्यः प्रच्छन्नबौद्ध इति प्रलपितम् अस्तु मध्वपरिचयदानस्य प्रमत्तमाध्वचिकित्सामन्तरा नान्यत्प्रयोजनम् ।

यच्च सौरपुराणस्य कैरप्यभियुक्तैरनुदाहरणादपुराणत्वमिति कथनं तत्तु—

'सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् ।
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश' ॥

( पाता० ख० ११ अ० )

इति पद्मपुराणे सौरपुराणस्योपपुराणेषु परिगणनात् प्रतारणामात्रम् । किं बहुना ब्र० १।३।२ सूत्रमध्वभाष्ये हेमाद्रौ निर्णयसिन्धौ तन्त्राधिकारनिर्णयादौ च क्वचिदादित्यपुराणत्वेन क्वचित्सौरपुराणत्वेन सौरपुराणमुद्धृतम् । आनन्दाश्रममुद्रितादन्यदेव सौरपुराणं तदिति चेत्क तदित्युच्यताम् । नच सौरपुराणं तामसमिति भ्रमितव्यम्,

'मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
आग्नेयं च षडेतानि तामसानि निबोध मे ॥'

इत्यनेन अकारणशिवद्रोहिभिः परिकल्पिते स्वतः प्रमाणतया त्वदीयैरभ्युपगते पाद्मपुराणीयोत्तरखण्डे स्थितेन वचनेन सौरपुराणस्य तामसत्वाकथनात् ।

यच्च सौरपुराणस्य तामसत्वसाधनाय—

'सात्विकास्त्रिदशाः सर्वे असुरा राजसा मताः ।
तामसा राक्षसाः सर्वे प्रकृत्याकृतिवर्णतः ॥' इति ।

श्रीशङ्कराचार्यकृतसर्वसिद्धान्तसंग्रहोपन्यसनम् तदपि सूर्यस्य देवत्वेन तदीयपुराणस्य सात्विकत्वसंपादकतया विपरीतम् तुष्यतु इति न्यायेन सौरपुराणस्य तामसत्वाभ्युपगमेनानुष्ठेयार्थाप्रकाशकत्वेऽपि इतिहासांशे प्रामाण्ये बाधकाभावः ।

यच्च मधुशब्दः सर्वत्र पुराणे पठ्यते एकत्र मध्वाचार्य इतिदर्शनेऽपि सन्धिवशनिष्पन्नः सः मध्वाचार्ये तु मध्वशब्द इति तयोर्भेद इति तद् धूर्तप्रलापमात्रम् पुराणे सन्धिनिष्पन्नः त्वदाचार्ये तु नेत्यत्र विनिगमकाभावात् पुराणे लेखकप्रमादेनापि मध्व इत्यस्य स्थाने मधु इति पाठसंभवाच्च । पौराणिकमध्वे प्रतिपादितस्याद्वैतश्रुतिविच्छेदकत्वशिवनिन्दकत्वाश्रुतपूर्वमाठरकौषायणकौठरव्यमाण्डव्य–भाल्लव्यश्रुतिब्रह्मतन्त्रपुरुषोत्तमतन्त्रब्रह्मतर्कादिस्मृतिकल्पकत्वादिलक्षणस्य त्वदाचार्ये समन्वयात् त्वदाचार्य एव सौरपुराणवचनविषयः । एताः श्रुतयः स्मृतयश्चान्विष्यन्तामितिचेत् क ताः इति त्वयैवान्विष्य दीयन्ताम् ।

यच्च पौराणस्य पद्मपादुकइत्यस्य पद्मपादाचार्य इति नाम कल्पयित्वा मध्वाचार्यपद्मपादाचार्ययोरनेकशतकव्यवहितत्वप्रतिपादनं तत्तु भ्रान्तिविजृम्भितम् । नहि पुराणे मध्वः पद्मपादाचार्यशिष्यत्वेन प्रतिपादितोऽपि तु पद्मपादुकाचार्यशिष्यत्वेन । स च पद्मपादुकाचार्यो मध्वाचार्यगुरोरच्युतप्रेक्षाचार्यस्य समकालीनो मध्वाचार्यस्य विद्यागुरुर्भवेदिति । डिण्डिमायां वर्णितस्तु माधवो न तु मध्वः ।

यच्च पौराणिको मधुर्वसन्तावतारः मध्वाचार्यस्तु वायोरवतारतया श्रुतौ प्रतिपादित इत्युक्त्वा श्रुतीरुदाहरसि तत्तु उपहासास्पदम् । नहि श्री शङ्कराचार्यरामानुजाचार्यवल्लभाचार्यादयः श्रुतौ प्रतिपादिताः त्वदाचार्यस्तु श्रुत्यापि स्तूयते इति महदाश्चर्यम् नूनं मीमांसाशास्त्रानभिज्ञोऽसि यतः 'परन्तु श्रुतिसामान्यमात्रम्' इति सूत्रे त्वादृशमन्दमतीनां शङ्काया निराकरणात् । मध्वशब्दघटितानां श्रुतीनां न मध्वाचार्यपरत्वमिति तु वेदभाष्यादौ स्पष्टमिति तदेवाग्रे प्रदर्श्यते—

मध्वो वो नाम मारुतं यजत्राः प्रयज्ञेषु शवसा मदन्ति ।
ये रेजयन्ति रोदसी चिदुर्वी पिन्वन्त्युत्सं यदयासुरुग्राः ॥

[ ऋ० ७ मं० ५७ सू० १ मं० ]

हे यजत्राः यजनीयाः मरुतः वः मारुतं मरुत्संबन्धि नाम मध्वः स्तोतारः यज्ञेषु शवसा बलेन प्रमदन्ति प्रकर्षेण स्तुवन्ति । ये मरुतः उर्वी विस्तीर्णे रोदसी चिद्‌द्यावापथिव्यौ रेजयन्ति कम्पयन्ति । किं चोत्सं मेघं पिन्वन्ति वर्षयन्ति । उग्रा उद्‌गूर्णा यद्वे मरुतोऽयासुः यान्ति सर्वत्र गच्छन्ति ।

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत्पूषणस्य ॥
[ ऋ० १० मं० ५ सू० ५ मन्त्र ]

वावशानः स्तूयमानः विद्वान् सर्वं जानानः सोग्निः अरुषीरारोचमानः सप्त स्वसॄः स्वयंसारिणीः काली कराली चेत्यादिकाः सप्त जिह्वाः मध्वो मदकराः यज्ञादुज्जभार यज्ञे स्वतेजसा प्रादुर्भूतः कं सुखेन दृशे सर्वपदार्थदर्शनार्थं किंच पुराजा पुराजातः सोऽग्निः द्यावापृथिव्योरन्तर्मध्येऽन्तरिक्षे स्थितस्ता जिह्वा येमे नियमितवान् सर्वत्र तेजोयुक्तो वर्तत इत्यर्थः अपि चेच्छन् यजमानान् कामयमानोऽग्निः पूषणस्य पूषेति पृथिवीनाम पार्थिवस्य लोकस्य वव्रिं रूपं पृश्निवर्णमविदत् प्रायच्छत् ।

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥
[ ऋ० १ मं० १५४ सू० ५ मं० ]

अस्य महतो विष्णोः प्रियं प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्धं पाथः । अन्तरिक्षनामैतत् पाथोऽन्तरिक्षं यथा व्याख्यातम् [नि० ६, ७] इति यास्केनोक्तत्वात् । अविनश्वरं ब्रह्मलोकमित्यर्थः अश्यां व्याप्नुयाम् कीदृशं यत्र स्थाने देवयवो देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तो नरो मदन्ति तृप्तिमनुभवन्ति तदश्यामित्यन्वयः । पुनः कीदृशम् उरुक्रमस्यात्यधिकं जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोर्व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वो मधुरस्योत्सो निष्यन्दो वर्तते तदश्यां यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिकं नास्तीत्याह—इत्था इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरो वा तत् पदं प्राप्तवतां न पुनरावृत्तिः

नच पुनरावर्तते इति श्रुतेस्तस्य बन्धुत्वं हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ।

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥

[ ऋ० १ मं० १४१ सू० ३ मं० ]

ईमेनमग्निं यद्यस्मात्कारणात् महिषस्य महन्नामैतत् महिषोऽभ्व ऋभुक्ता इति तन्नामसु पाठात् महतो यज्ञस्य बुध्नान्मूलादाधानादारभ्य वर्पसः रूपनामैतत् रूपस्योपक्रमोपसंहारात्मकस्य सिद्धये ईशानासः स्वकीयव्यापारसमर्थाः सूरयो मेधाविन ऋत्विजः शवसा बलेन मन्त्रादिरूपेण शारीरेण वा निष्क्रन्त निष्कुर्वन्ति साधयन्ति उत्पादयन्ति काष्ठात् । किंच यदीमेनमेवाग्निं प्रदिवः पुराणात् अनादिकालमारभ्य न केवलमिदानीमेवेत्यर्थः । पूर्ववदिदानीं मध्वो मधुनो मधुसदृशस्याधव आधवने प्रक्षेपे निमित्ते सति गुहा सन्तं गुहायां वेद्यां काष्ठेषु निगूढं सन्तं मातरिश्वाऽन्तरिक्षे चेष्टमानो वायुरनुक्रमेण मथायति चालयति उद्बोधयतीत्यर्थः ।

एवं चेमाः श्रुतयो न मध्वाचार्यो वायोरवतार इत्यस्य साधिका इति सिद्धम् ।

यच्च मत्स्यपुराणेऽग्रे निन्दन्तो ह्यीश्वरं मार्गमिनिवचने ईश्वरपदं न शिवपरं किन्तु विष्णुपरमिति तदसत् 'विनिन्दितो महादेवः शङ्करो नीललोहित' इति प्रकरणविरोधात् ईश्वरेशानमहादेवादिशब्दानां शिवपरतायां एव प्रामाणिकैरभ्युपगमाद्यथा चैतत्तथा शिवपरत्वनिर्णये वक्ष्यते ।

यच्च यदि पूर्वं मध्वाचर्योऽद्वैती तर्हि कथमद्वैतिना शृङ्गेरीमठाधीशेन शास्त्रार्थ इति तदसत्, नैयायिकानां वैयाकरणानां वा लोकप्रतिष्ठार्थिनां मिथः शास्त्रार्थस्येवाद्वैतिनोरपि संभवात् ।

यच्च ऊर्ध्वपुण्ड्रत्रिपुण्ड्रधारणाद्याचारभेदेन मिथः कलहे शैवैः वैष्णवनिन्दायै वैष्णवैश्च शैवनिन्दायै निन्दावाक्यानि निर्माय पुराणेषु प्रक्षिप्तानि इति वदसि तत्साधु उत्पथात्पन्थानं प्रतिपन्नोऽसि तर्हि किमिति पौराणिकानि प्रक्षिप्तानि वचनान्युपादाय शिवस्य भस्मनो रुद्राक्षस्य वा निन्दनं करोषि । इतः परं न करिष्यामीति चेत्, साधु वत्स चिरं जीव ।

## श्रीशङ्कराचार्यावतारप्रयोजनम् ।

बौद्धादिवेदबाह्यमतस्य निरासाय शङ्करसेनानीब्रह्मविष्णवः क्रमेण श्रीशङ्कराचार्यकुमारिलभट्टपादमण्डनमिश्रपद्मपादाचार्या अवतेरुरिति माधवीयशङ्करदिग्विजयादवगम्यते ।

यत्तु माध्वेन—

बौद्धादिनास्तिकध्वस्तवेदमार्गं पुरा किल ।
भट्टाचार्यः कुमारांशः स्थापयामास भूतले ॥

इति श्रीशङ्कराचार्यकृतसर्वसिद्धान्तसंग्रहात् श्रीशङ्कराचार्यात् पूर्वमेव बौद्धमतं ध्वस्तमासीदिति श्रीशङ्कराचार्यवैयर्थ्यम् एवमानन्दगिरिकृत-दिग्विजये श्रीशङ्कराचार्यं कुमारिलभट्टपादः 'नूतनो बौद्धतर' इत्युक्तवा-निति लिखितं तेन प्रच्छन्नबौद्धः शङ्कराचार्य इति तदसत् ।

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥

इति भट्टपादोक्त्या [ श्लोकवार्तिक ]

अष्टौ सहस्राणि विभान्ति विद्वन् सद्वार्तिकानां प्रथमेऽत्र भाष्ये ।
अहं यदि स्यामगृहीतदीक्षो ध्रुवं विधास्ये सुनिबन्धमस्य ॥ ८१ ॥
निरास्थमीशं श्रुतिलोकसिद्धं श्रुतेः स्वतोमात्वमुदाहरिष्यन् ।
न निन्हुवे येन विना प्रपञ्चः सौख्याय कल्पेत न जातु विद्वन् ॥ ८९ ॥

[ सर्ग ७ ]

माधवीयशङ्करदिग्विजयेन च भट्टपादानामाचार्यशङ्करभगवत्पादे कीदृशी आस्थासीदिति स्फुटमवगम्यते । किंच बौद्धमतनिराकरणं सर्वेषां वैदिकानां कृत्यमासीदिति कुमारिलभट्टैरपि बौद्धनिराकरणं कृतं तावता श्रीशङ्कराचार्यादिभिर्न कृतमिति कथमवगम्यते । कुमा-रिलभट्टैरीश्वरस्य निराकरणात् ईश्वरस्थापनमपि श्रीशङ्कराचार्य-कृत्यमवशिष्टम् निवृत्तिमार्गोपदेशः कापालिकशाक्तपाञ्चरात्रपाशुपता-दीनां निराकरणं च । सांप्रतमुपलभ्यमानानन्दगिरिशङ्करजयस्य च केनचिन्मन्दमतिना आनन्दगिरिनाम्ना प्रकटीकृतत्वेनाप्रामाणिकत्व-

मेव । यतः डिरिडमायां ६२४ पृ० एतत्कथाजालं बृहच्छङ्करविजये आनन्दगिरिकृते एव द्रष्टव्यमिति लिखितं सा च कथाऽस्मिन्नोपलभ्यते। किंच आनन्दगिरिरचिते शङ्करविजये पूर्वं शैवादिमतानां खण्डनं पश्चाच्च तेषामेव स्थापनं श्रीशङ्कराचार्यैः कृतम् इति परस्परविरुद्धो लेखः कथमभ्युपगन्तुं शक्यः। किंच माधवेन 'प्राचीनशङ्करजये सारः संगृह्यते स्फुटम्' इति प्रतिज्ञाय उपलभ्यमानानन्दगिरिशङ्करविजयविरुद्धकथालेखोऽपि उपलभ्यमानस्यानन्दगिरीयत्वाभावं साधयति। विरोधिना त्वं बौद्ध इतिकथनेऽपि सत्यभावाच्च एतेन नूतनो बौद्धतरः शंकराचार्यः इति तदीयदिग्विजयस्थभट्टोक्त्या आचार्यशङ्करस्य बौद्धत्वसाधनं साहसमात्रम्।

## अद्वैतवादशून्यवादयोर्भेदः

'ते च माध्यमिकयोगाचारसौत्रान्तिवैभाषिकसंज्ञाभिः प्रसिद्धाः बौद्धाः यथाक्रमं सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते'

इति माधवीयसर्वदर्शनसंग्रहात्—

'त्रयाणामत्र बौद्धानां बुद्धिरस्त्यविवादतः।
प्रत्यक्षसिद्धं बाह्यार्थमसौ वैभाषिकोऽब्रवीत्।
बुद्ध्याकारोऽनुमेयोऽर्थो बाह्यः सौत्रान्तिकोदितः॥
बुद्धिमात्रं वदत्यत्र योगाचारो न चापरम्।
नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल॥'

इति सर्वसिद्धान्तसंग्रहात्—

तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः॥

इति श्लोकवार्तिकात्—

'ज्ञानापन्हववादिनोऽपि प्रथममर्थमपन्हुत्य निर्विषयज्ञानानुपपत्तेः ज्ञानमपन्हुवते'

इति तन्त्रस्थन्यायरत्नाकरात्—

एतदर्थोपोद्बलकात्—

इति बाह्यविषयप्रतिपादनात्तदभावकृता मतिसंवृतिः ।
उभयतत्त्वविदां परमार्थतः क्षममिदं धुरि धर्मविचारणे ॥

इति शून्यवादान्तस्थश्लोकवार्तिकाच्च—

माध्यमिको ज्ञानार्थयोरुभयोरप्यभाववादीत्यवगम्यते । अत एव सर्वनास्तित्ववादीति शून्यवादीति च व्यवह्रियते । न तु तन्मते शून्यं नाम किंचित्तत्वमस्ति ।

एवं स्थिते—

माध्यमानां तथा ब्रह्मविदां भेदोऽयमिष्यताम् ।
पूर्वे सर्वं मृषेत्याहुर्ब्रह्म ( ज्ञानं ) सत्यं परे जगुः ॥

एतदेव 'एवं सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति तदुक्तं भगवता लङ्कावतारे—बुद्ध्याविविच्यमानानां स्वभावो नावधार्यते । अतोनिरभिलप्यास्ते निःस्वभावाश्चदेशिताः ॥ इति विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते' इति ग्रन्थेन खण्डनकृतोक्तम् ।

नच—

आकारसहिता बुद्धिर्योगाचारस्य संमता ।
केवलां संविदं स्वच्छां मन्यन्ते माध्यमाः पुनः ॥

[ जैनजिनदत्त ] विवेकविलासस्य—

मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परं संविदम्'

[ जैनराजशेखर ] षड्दर्शनसमुच्चयस्य च—

दर्शनेन माध्यमिका निराकारज्ञानस्य सत्यत्वमाशेरते इत्यवगम्यते एवं च 'नास्ति बुद्धिरपीत्याह' इति वचनं साकारबुद्ध्यभावाभिप्रायमिति माध्वोक्तं युक्तमिति वाच्यम् उपक्रमे 'त्रयाणामत्र बौद्धानां बुद्धिरस्त्यविवादतः' इत्युक्त्या चतुर्थस्य बुद्धिराहित्यावगमेन निराकारा बुद्धिस्तेन स्वीक्रियते इत्यस्य वक्तुमशक्यत्वात् । अत एवाग्रे—

विज्ञानमपि नास्त्येव ज्ञेयाभावे समुत्थिते ।
इति माध्यमिकेनैव सर्वं शून्यं विचारितम् ॥

इत्यनेन सर्वशून्यत्वोक्तिः संगच्छते । विवेकविलासषड्दर्शनसमुच्चययोः का गतिरिति चेत् तयोर्जैनप्रणीततया बौद्धसिद्धान्तनिर्णये प्रामाण्यायोगात् तावता शून्यस्य ज्ञानरूपत्वसिद्धावपि सत्यानन्दरूपताया असिद्धत्वेन सत्यज्ञानानन्दस्वरूपब्रह्मवादस्य ज्ञानरूपशून्यवादस्य चैक्यायोगाच्च ।

नच 'शून्यवादिनां शून्यताया अपि सत्यत्वात्' इति जिज्ञासासूत्रीयभामतीग्रन्थात् 'शून्यवादिभिरपि सत्वरहितज्ञानानन्दात्मकत्वस्यान्यत्राङ्गीकारात्' [ द्वि० प० अखण्डार्थत्वोपपत्तिः ६७६ पृ० ] इत्यद्वैतसिद्धिग्रन्थात् 'शून्यवादस्य विज्ञानवादविशेषरूपत्वात्' इति लघुचन्द्रिकाग्रन्थाच्च शून्यवादिनां शून्यमपि सत्यज्ञानानन्दस्वरूपमेवेति ब्रह्मवादशून्यवादयोर्भेदासिद्धिरिति माध्वोक्तं युक्तमिति वाच्यम् अद्वैतग्रन्थानामभिप्रायानवबोधेनैतादृशपङ्के माध्वस्य निपातात् अत एवाहुः—

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
अतस्त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥ इति ।

कोऽभिप्रायोऽद्वैतग्रन्थानामिति चेत्सावधानेन मनसा शृणु विमतं सदधिष्ठानम् असत्यत्वाद्गन्धर्वपुरीवदित्यनुमाने 'न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्' इत्यनेन ग्रन्थेन व्याप्त्यसिद्धौ शङ्कितायां 'तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेरि' त्युत्तरितम् ततः 'शून्यवादिना असदधिष्ठान एव भ्रमः स्वीक्रियते' इति शङ्कां मनसि कृत्वा—'शून्यवादिनामपि शून्यताया एव सत्यत्वात्' इत्युत्तरितम् । अत्र सत्यत्वादित्यस्य सत्यत्वेनाभ्युपेयत्वादित्यर्थः । अन्यथा शून्यताया असत्यत्वे प्रपञ्चस्य सत्यत्वापत्तिरित्यभिप्रायः । न तु तैः शून्यता सत्या अभ्युपेयते । अतएव भामतीकृतोत्तरत्र 'तत्त्वस्य कस्य चित्त्वयानङ्गीकारात् तत्त्वज्ञानं विना सर्वबाधासंभवेन सर्वमिथ्यात्वासिद्धिः' इत्युक्तम् । शून्यवादिना

शून्यतायाः सत्यत्वमभ्युपेयत इत्यस्य] पूर्वग्रन्थाभिप्रेतत्वे उत्तरत्र त्वयानङ्गीकारादिति कथनासंगतेः। शून्यतायाः सत्यत्वं च शून्यवादिना नेष्यते इति बौद्धग्रन्थमुद्धृत्यानुपदमेव विवेचयिष्यते।

अत्र अद्वैतसिद्धिग्रन्थोपन्यासोऽपि अनेन ज्ञानलवदुर्विदग्धेन तत्रत्यपूर्वापरग्रन्थौ न दृष्ट इत्येवानुमापयति तथाहि-[ ६७६ पृ. ] ननु सत्यं ज्ञानमानन्दं ब्रह्मेत्यादिवाक्यस्य लक्षणवाक्यत्वं न संभवति व्यावहारिकसत्यत्वस्य ग्रहणे घटादावतिव्याप्तेः पारमार्थिकसत्यत्वस्य ग्रहणे च अद्वैतश्रुतिविरोधभिया ब्रह्मणि तस्यासत्त्वेनाव्याप्तेरित्यर्थकेनाशङ्क्य 'परमार्थसत्यादिरूपताया ब्रह्मस्वरूपलक्षणत्वात् अस्मन्मते यद्यपि सत्याद्यन्यतमपदं स्वरूपलक्षणपरं ब्रह्मणोऽन्यस्य तदाभासत्वात्, तथापि परैरपि ब्रह्मणोऽन्यत्र सत्यत्वस्य, सत्यत्वे सति ज्ञानत्वस्य सत्यत्वे सति आनन्दत्वस्य शून्यवादिभिरपि सत्त्वरहितज्ञानानन्दात्मकत्वस्य अङ्गीकारात् मिलितं विना न निर्विचिकित्सब्रह्मसिद्धिरिति मिलितं लक्षणम्' इत्युक्तम्। एवं च ज्ञानानन्दात्मकशून्ये ब्रह्मलक्षणस्याव्याप्तिवारणाय श्रुतौ सत्यपदं दत्तमित्यर्थो लभ्यते। 'मायोपमं च विज्ञानमुक्तमादित्यबन्धुना' इति माध्यमिककारिकया मिथ्याभूतं ज्ञानं शून्यवादी स्वीकरोतीत्यवगम्यते। अत एव अद्वैतसिद्धिकृताऽपि सत्त्वरहितज्ञानानन्दात्मकत्वस्येत्यत्र सत्त्वरहितेति विशेषणं दत्तम्। मिथ्याभूतज्ञानाभिप्रायकावेव पूर्वोदाहृतौ विवेकविलास षड्दर्शनसमुच्चयौ कथंचिन्नेयौ। किं च शून्यं नानन्दस्वरूपमतोऽपि भेदः।

यद्यपि 'यद्यपि निर्वाणं परमं सुखं सकलोपद्रवरहितत्वात् तथापि तदशक्यं प्राप्तुं तत्प्राप्त्युपायाचरणस्यातिदुष्करत्वात् भवस्त्वयत्नसाध्यः—उच्यते विपरीतमवधारितं यतः—

अकुर्वाणस्य निर्वाणं कुर्वाणस्य पुनर्भवः।
निश्चिन्तेन सुखं प्राप्तुं निर्वाणं तेन नेतरः॥

सर्वासु क्रियासु निरस्तव्यापारेण निश्चिन्तेन निर्वाणमवाप्यते तस्मात्सुखं प्राप्तुं निर्वाणम्' इति आर्यदेवोक्त्या शून्यं सुखस्वरूप-

मित्यवगम्यते तथापि 'अहमेव न किञ्चिच्चेद्भयं कस्य भविष्यति' इति बौद्धग्रन्थेन आत्मन एवाभावे दुःखाभावस्येव सुखाभावस्यापि स्वीकारात् निर्वाणं परमं सुखमिति तु दुःखाभावे सुखप्रयोगमाश्रित्योपपादनीयः। अत एव 'न च असन्नेवेति श्रुत्युक्तशून्यतायाः परममुक्तित्वमिति वाच्यम् शून्यताया असुखरूपत्वेनापुरुषार्थत्वात्' [७२० पृ०] इति 'नन्वसन्नेव सभवतीति श्रुतिः शून्यतापत्तिरूपमोक्षपरेति चेन्न शून्यताया अपुरुषार्थत्वात आनन्दावाप्तिरूपमुक्तिप्रतिपादकाविरोधाच्च' [७३२ पृ०] इतिचाद्वैतसिद्धावुक्तम्। अद्वैतसिद्धौ शून्यस्य कचिज्ज्ञानानन्दात्मकत्वकथनं तु अभ्युपेत्यवादेनेत्यभ्युपगन्तव्यम्। शून्यवादी सर्वमिथ्यात्ववादीत्यत्र—प्रमाणानि—'शून्यवादिभिः सदधिष्ठानभ्रमानङ्गीकारात्' [१४० पृ०] इति शून्यवादे आत्महानिर्मोक्षं' [१५० पृ० ] इति 'ज्ञानातिरिक्तं ज्ञेयमलीकं कल्पितभेदेन ज्ञानमेव ज्ञेयमिति वादिनो योगाचारस्य ज्ञानं तादृशमपि मिथ्येतिवादिनो माध्यमिकस्य [ ३९४ पृ० ] इति चाद्वैतसिद्धिः, 'शून्यवादे ज्ञानज्ञेयादिप्रपञ्चस्य मिथ्यात्वं स्वीक्रियते इति भावः' [ ४२७ पृ० ] इति लघुचन्द्रिका, 'माध्यमिकमते हि विज्ञानरूपमपि सर्वं मिथ्यैव क्षणिकभावनया शून्यभावनया च आत्मज्ञानरूपो मोक्षः तदेतत् विज्ञानरूपात्ममिथ्यात्वमतमेव शून्यमात्मेत्यननोक्तम् न हि शून्यंनाम तत्त्वं किञ्चित्तेनोच्यते' [ १०९ रत्नावली ] 'सर्वं मिथ्येति माध्यमिकमतम्' इति खण्डनं च।

एवं च शून्यं न सत्यं नापि सुखं नापि ज्ञानम् ब्रह्म तु सत्यं ज्ञानं सुखं चेति सिद्धः शून्यवादब्रह्मवादयोर्भेदः।

यत्तु—

न सन्नासन्न सदसत् न वाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥

अयमर्थः सर्वं जगन्न सत् बाधितत्वात् नासत् प्रतीयमानत्वात्

नोभयात्मकं विरोधात् नानुभयात्मकमसंभवात् किन्तु चतुष्कोटिविनिर्मुक्तं सर्वं शून्यमेवेत्यस्येव—

अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ।
कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स एव सः ॥

इत्यनयोर्गौडपादकारिकयोः पर्यालोचनान्मतद्वयस्यैक्यमिति माध्वस्तदसत् । चलस्थिरोभयाभावैरिति दलस्य शून्यवादापेक्षया एतद्वादस्य वैलक्षण्यकरणार्थत्वात् तथाहि आत्मा अस्तीत्यस्य चलः इत्यनेनान्वयात् आत्मा परिणामीत्यर्थः, अर्थात् कदाचित्सुखाकारेण कदाचिज्ज्ञानाकारेण परिणमते । इदं च वैशेषिकमतम्, आत्मा नास्ति इत्यस्य स्थिर इत्यनेनान्वयात् अपरिणामीत्यर्थः इदं च क्षणिकविज्ञानवादिमतम्, इदं च क्षणिकविज्ञानस्य क्षणमात्रवृत्तितया न परिणामित्वमित्यभिप्रायेण, आत्मा अस्ति नास्ति इत्यस्य उभय इत्यनेनान्वयात् परिणामी अपरिणामी चेत्यर्थः ज्ञानाकारेण परिणामी आत्मत्वेनापरिणामी चेत्यर्थः इदंजैनमतम्, आत्मा नास्ति नास्ति वीप्सा अत्यन्ताभावबोधनार्था अस्याभाव इत्यनेनान्वयः इदं च शून्यवादिमतम्, तदयं निष्कर्षः वेदान्तिमते वैशेषिकविज्ञानवादिजैनशून्यवाद्यभिमताद्विलक्षण आत्मा इति । माध्वस्य शङ्का तु चलस्थिरोभयाभावैरिति दलमबुध्वैव प्रवृत्तेतिमन्तव्यम् ।

एतेन—

न सच्चाहं न चासच्च नोभयं केवलः शिवः ।

इति पद्यप्रबन्धो व्याख्यतः

शून्यं न विज्ञानरूपमित्यभिप्रेत्य—'नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् । एकानेकस्वभावेन विरोधाद्वियदब्जवत्' इत्युक्तम् ।

'यच्च 'ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यधितिष्ठादिति' साधनमाला 'केवलाद्वयविज्ञप्तिलक्षणामनन्तां पश्येत्' इति रत्नाकरशान्तिपादोक्तिश्च शून्यतायां ज्ञानरूपत्वे प्रमाणमुपन्यस्तं तच्च मिथ्याभूतज्ञानाभिप्रायं द्रष्टव्यम् ।

साम्प्रतं शून्यवादिग्रन्थमुद्धृत्य काचित्तदीया प्रक्रिया सहृदयानां मनोविनोदाय प्रदर्श्यते । बोधिचर्यावतारे—

संवृतिः परमार्थश्च सत्यद्वयमिदं स्थितम् ।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते ॥

अयमर्थः संव्रियते आव्रियते अनयेति संवृतिरविद्या सा द्विधा तथ्यसंवृतिः मिथ्यासंवृतिश्चेति तत्र संवृतिसत्यम् अदोषवदिन्द्रियैरुपलब्धं नीलादिकम् मिथ्यासंवृतिसत्यं च दोषवदिन्द्रियोपलब्धं मायामरीचिप्रतिबिम्बादि । परम उत्तमोऽर्थः परमार्थः अकृत्रिमं वस्तुरूपं यदधिगमात् सर्वावृतिवासनानुसंधिक्लेशप्रहाणं भवति सर्वधर्माणां निःस्वभावताशून्यतातथताचेति पर्यायाः । सर्वस्य हि प्रतीत्यसमुत्पन्नस्य 'कारणादुत्पन्नस्य' परायत्तात्मलाभस्य प्रतिबिम्बस्येव कुतः सत्स्वभावता अत्रापि नाभिनिवेष्टव्यम् उभयोरपि कल्पनात्मकतया सांवृतत्वात् । चकारः सत्यद्वयस्यातुल्यबलतां समुच्चिनोति तत्र संवृतिसत्यमवितथं रूपं लोकस्य परमार्थसत्यं च सत्यमविसंवादकं तत्त्वमार्याणामिति विशेषः । सर्वभावेष्वेतत्स्वभावद्वयं वर्तते यदाह—

सम्यङ् मृषादर्शनलब्धभावं रूपद्वयं बिभ्रति सर्वभावाः ।
सम्यग्दृशां यो विषयः स तथ्यं मृषादृशां संवृतिसत्यमुक्तम् ॥

तदुक्तं—

द्वे सत्ये समुपाश्रित्य बौद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ इति

सांवृतस्य सत्यत्वोक्तिस्तु लोकानुरोधेन वस्तुतस्तु परमार्थ एवैकं सत्यमतो न वृतिः परमार्थसतो रूपमाह बुद्धेरगोचरस्तत्त्वम् बुद्धेः सर्वज्ञानानामगोचरः सर्वप्रपञ्चनिर्मुक्तस्वभावः परमार्थसत्यं कथमिव प्रतिपाद्यम् तथापि श्रोतृणामनुग्रहाय संवृत्या निदर्शनेन किंचिदभिधीयते यथा तिमिरप्रभावात्तैमिरिकः सर्वमाकाशदेशं केशोण्डुकमण्डितमितस्ततो मुखं विक्षिपन्नपि पश्यति तं तथा कुर्वन्तमवलोक्य अतैमिरिकः तत्समीपमुपसृत्यापि न किंचित्पश्यति तस्मै यथाभूतमसौ वदति नात्र केशाः सन्तीति न च तेन तथा प्रतिपादयतापि कस्यचित्प्रतिषेधः कृतो भवति विधानं वा तच्च केशानां तत्त्वं यत्ते-

मिरिकः पश्यति नातैमिरिकः । [तदेवमविद्योपघाताद्बाला यदेतत् स्कन्धधात्वयनादि स्वरूपमुपलभन्ते तदेषां सांवृतं रूपं, तानेव स्कन्धान् येन स्वभावेन निरस्तसमस्ताविद्यावासना बुद्धाः न पश्यन्ति तदेषां परमार्थसत्यम् सा च शून्यता न भावाद्व्यतिरिक्ता भावस्यैव तत्स्वभावत्वात् ।

यदा न भावो नाभावो मतेः संतिष्ठते पुरः ।
तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ॥

ननु शून्यतायास्त्रासः कुतः—

यद् दुःखजननं वस्तु त्रासस्तस्मात् प्रजायताम् ।
शून्यता दुःखशमनी ततः किं जायते भयम् ॥
यतस्ततो वास्तु भयं यद्यहं नाम किंचन ।
अहमेव न किंचिच्चेद्भयं कस्य भविष्यति ॥

तस्मात्कल्पनामात्रमेतत् अहमित्यर्थः शून्यमाभातीति निश्चितम् ।

दुःखहेतुरहङ्कारः आत्ममोहात्तु वर्द्धते ।
ततोऽपि न निवर्त्यश्चेद्वरं नैरात्म्यभावना ॥

अभिसमयालङ्कारे [ ९२ पृ० ] 'ननु यदालम्ब्यते तन्नास्ति यथा द्विचन्द्रादि सर्वधर्मशून्यतापि चेदालम्ब्यमाना तथैव नास्तीति सर्वधर्मास्तित्वमापद्यते इति चेददोष एषः, यस्मान्न देवदत्तप्रख्यस्याभावस्यापवादान्तस्य हन्तरि यज्ञदत्तप्रख्ये स्वभावे समारोपान्ते तच्छून्यतया हते प्रादुर्भावः' इति [ ३६० पृ० ] 'तत्र मायोपमत्वाच्छून्यता' इत्युक्तम् ।

तथा च आर्यदेवः—

दृश्यते सर्वगः कैश्चित्कैश्चित्कायमितः पुमान् ।
दृश्यतेऽणुमितः कैश्चित्प्राज्ञैर्नास्तीतिगम्यते ॥

माध्यमिकावृत्तौ [ ८७ पृ० ]

यद्यशून्यं भवेत् किंचित्स्याच्छून्यमपि किंचन ।
न किंचिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥

यदि शून्यता नाम, काचित्स्यात्तदा तदाश्रयो भावस्वभावः स्यान्न त्वेवम् । इहहि शून्यतानामेति सर्वधर्माणां सामान्यलक्षणमित्यभ्युपगमाद् शून्यधर्माभावाद शून्यतैव नास्ति यदा चाशून्याः पदार्थाः न सन्ति अशून्यता च नास्ति प्रतिपक्षनिरपेक्षत्वात् शून्यता खपुष्पमालावन्नास्तीत्यवसीयताम् यदा च शून्यता नास्ति तदा तदाश्रया अपि पदार्था न सन्तीति स्थितमविकलम्' इत्युक्तम् । प्रज्ञापारमितायामपि 'निर्वाणं मायोपमं वदामी' ति ।

एवं—

सर्वं फेनप्रतीकाशमसारं बुद्बुदोपमम् ।
निरात्मकमनित्यं च मायामारीचिकासमम् ॥ इति ॥

'तस्मादशून्येन विना शून्यं न भवति तेन विना च शून्यं नाम न किंचिदस्तीति सिद्धम् ' इति आर्यदेवः ।

एतेन शून्यस्य तुच्छतया ब्रह्मणश्च सद्रूपतया न शून्यवादब्रह्मवादयोरैक्यम् । इति शून्यवादिमते निरधिष्ठानक एव भ्रमः ब्रह्मवादिमते च ब्रह्माधिष्ठानको भ्रम इत्येषोऽपि विशेष इति सर्वमनवद्यम् ।

## विज्ञानवादब्रह्मवादयोर्भेदः ।

योगाचारो हि बाह्यमपलपन् क्षणिकं विज्ञानमात्मेत्याहेति—

तथाहि सन्तो ये नाम ते सर्वे क्षणभङ्गुराः ।
नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति संगिरन्तेऽपरे पुनः ॥ ३२८ ॥
तेषामल्पापराधंतुदर्शनं नित्यतोक्तितः ।

[ बौद्धशान्तरक्षित ] तत्त्वसंग्रहाद्—

अवगम्यते । औपनिषदाः ( अद्वैतिनः ) तु नित्यविज्ञानमात्मेति वदन्तीति स्फुटो मतद्वयस्य भेदः । तदुक्तं माधवीयशङ्करदिग्विजये विज्ञानवादीक्षणिकत्वमेषामङ्गीचकारेतिमहान् विशेषः । इदं सर्वं विस्तरेण माध्वभ्रान्तिनिरासे एव निरूपितम् ।

यच्च तस्य खण्डनायानेन मूर्खापसदेन बहुजल्पितं तत्तु 'मूर्खस्य नास्त्यौषधम्' इति न्यायेनैतस्य मूर्खतापनयने विधिरपि विफलप्रयत्न इति मन्यामहे ।

व्यवहारदशामाश्रित्यापि विज्ञानवादाद्वैतवादयोर्भेदः माध्वभ्रान्तिनिरासे उक्तः सोऽनेन न बुद्ध इति 'न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यती'ति । यदपि 'ब्रह्मणा श्वेतच्छत्रं धृतम्' इति ग्रन्थेन बौद्धेनापि परमेश्वरसत्ताङ्गीक्रियते इति माध्वस्य कथनं तदपि प्रलापमात्रम् बौद्धैर्जगज्जनिकर्तृत्वरूपस्येश्वरत्वस्य कुत्राप्यनङ्गीकारात् । यत्तु स्तम्भादिप्रत्ययानां भ्रमत्वं प्रत्ययत्वहेतुना बौद्धैर्वस्तुसामान्यस्य च मिथ्यात्वं दृश्यत्वहेतुनाऽद्वैतिभिरङ्गीक्रियते इति प्रत्ययसामान्यस्य भ्रमत्वमुभाभ्यामङ्गीक्रियते इति तदसत् अद्वैतिभिर्ज्ञानातिरेकेण बाह्यस्य बाह्यात्मना व्यावहारिकसत्यताङ्गीकारात् बौद्धैश्च ज्ञानात्मनैव बाह्यस्य सत्यत्वं व्यवहारदशायां न तु घटात्मना तावतैव च व्यवहारोपपत्तिः तदुक्तं शाङ्करभाष्ये 'तस्मिँश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तः स्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते' इति अद्वैतिभिस्तु व्यवहारोपपत्त्यर्थं स्वाप्निकानामपि 'रथान् रथयोगान् पथः सृजते' इतिश्रुत्युपष्टम्भेनोत्पत्तिरङ्गीक्रियते । एवं च स्वाप्नपदार्थानां यथा प्रतिभासकाले एव सत्त्वं तथा जाग्रत्कालीनघटादीनामपीति बौद्धमतं 'वैधर्म्याच्च न स्वप्नवदि'त्यनेन खण्डितम् अद्वैतमते तु बाह्यस्य प्रतिभासातिरिक्तकालेऽपि सत्त्वमस्तीति न तस्योक्तसूत्रेण खण्डनं सम्भवति । न च दृष्टिसृष्टिवादे दृष्टिरेव सृष्टिरित्यर्थाज्ज्ञानात्मनैव बाह्यस्य सत्त्वमिति वाच्यम् दोषप्रयुक्तत्वनिबन्धनज्ञातैकसत्त्वस्यैव दृष्टिसृष्टिपदार्थतया तद्वादेऽपि व्यवहारे बाह्यात्मनैव बाह्यसत्तालाभात् । यच्च विशिष्टस्यैवेश्वरत्वेन मिथ्यात्वमिति तदसत् 'मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः' इति वचनेन बिम्बस्यैवेश्वरत्वाभ्युपगमेन तस्याद्वैतिभिः सत्यत्वाङ्गीकारादित्यद्वैतसिद्धान्तानभिज्ञस्य माध्वस्य भ्रान्तिविलसितमेतत् । यत्तु वस्तुसामान्यस्यमिथ्यात्वमद्वैतिभिरङ्गीक्रियते तदसत् ब्रह्मणस्सत्यत्वाङ्गीकारात् । श्रुतौ ब्रह्मणो ज्ञेयत्वमज्ञेयत्वं च प्रतिपादितमिति तदेव मयोपपाद्य माध्वभ्रान्तिनिरासे प्रदर्शितम् तत्र देवानांप्रियेण खण्डनाभासमुपक्षिपताऽपि श्रुतीनामुपपादनं न कृतमित्यहो अस्य प्रमादिता ।

## माध्वमतस्यावैदिकत्वम् ।

वेदाः स्वतः प्रमाणानि स्मृत्यादयस्तु तन्मूलतयेति दार्शनिकानां डिण्डिमनादः । मध्वभाष्ये तु २।१।४ सूत्रे पुराणान्यपि स्वतः प्रमाण-

तथा वचनाभासमुपन्यस्य स्वीकृतानीति स्फुटमस्य वेदद्रोहित्वम् ।

किंच ब्रह्मण उपादानकारणत्वानङ्गीकर्तृमध्वमतं 'जन्माद्यस्य यतः' १।१।२ इति सूत्रविरुद्धम् यत इदं सूत्रं 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' इति श्रुत्यनुरोधेन ब्रह्मण्येव स्थितिं लयं च प्रतिपादयत् ब्रह्मण उपादानकारणतामाह न हि निमित्तकारणे कुलाले घटस्य स्थितिर्लयश्च दृश्येते अपि तु उपादानकारणे कपाले तच्चोपादानकारणत्वं ब्रह्मणो न परिणाम्युपादानकारणत्वरूपम् किन्तु विवर्ताधिष्ठानत्वरूपं विवर्तोपादानत्वं रजतं प्रति शुक्तिकाया इव ।

एवं 'तदनन्यत्वमारम्भणशब्दादिभ्य' २।१।१४ इति सूत्रमपि मध्वस्य जगत्सत्यत्ववादिनः प्रतिकूलम् तथाहि तत्पदेन कार्यकारणे परामृश्येते एवं च कारणाद् ब्रह्मणः व्यतिरेकेण कार्यस्यानन्यत्वमभावः 'यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः । अयमभिप्रायः—ये हि नष्टदृष्टस्वरूपाः ते न सन्तो यथा रज्जुसर्पादयः तादृशं च सर्वं विकारजातं घटादि अतो न सत् यदस्ति तदस्त्येव यथात्मा न चैवं विकारजातम् यदि हि सत्स्वभावं विकारजातं भवेत् कथं कदाचिदसत् स्यात् असत्स्वभावं चेत् कथं कदाचित्सत् स्यात् सदसतोरेकत्वविरोधात् किन्तु स एव न भवति तदेतदाह वाचारम्भणं वाचया केवलयारभ्यते विकारजातं न तु तत्त्वतोऽस्ति यतो नामधेयमात्रमिति । मध्वभाष्ये तु 'स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा नैवं ब्रह्मणः किन्तु स्वरूपसामर्थ्यादेव तस्य सृष्टिः किं स्विदासीदधिष्ठानमारम्भणं कतमस्वित् कथमासीदित्याक्षेप अधिष्ठानाद्यनुक्तेः' इत्येवं व्याख्यातं तत्र अनन्यत्वमित्यस्यान्यानपेक्षत्वमित्यर्थकरणमुदन्तरम् ।

एवं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' १।४।२३ इदं सूत्रं ब्रह्मण उपादानकारणतामाह—तथाहि प्रतिज्ञा एकविज्ञानेन सर्वविज्ञानरूपा, दृष्टान्तः यथा सोम्यैकेनेत्यादिः, तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवति उपादानकारणाव्यतिरेकात्कार्यस्य निमित्तकारणाव्यतिरेकस्तु नास्ति कार्यस्य इति । मध्वस्तु 'स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशन्ति इति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि

स एव' इति व्याख्यातवान् इदं व्याख्यानमसंगतम् पूर्वं पुंशब्दा नपुंसकशब्दाश्च ब्रह्मवाचका इति यदि विशेषेण कथितं भवेत् तदा स्त्रीशब्दा अपीति कथनं समञ्जसं स्यात् एवं घटश्च इति वा किमिति नोक्तम्। प्रकृतिशब्दश्च उपादानकारणे जनिकर्तुः प्रकृतिरिति सूत्रे प्रसिद्धः, सांख्यानामपि प्रकृतिपदस्योपादानकारणे एव प्रयोगः, अत एव ईश्वरकृष्णेन प्रकृतिविकृतयः सप्त इत्युक्तम्। एतेनात्र सूत्रे उपादानकारणत्वबोधकं पदं नास्तीति माध्वोक्तमपास्तम्।

एवं जीवब्रह्मणोः पारमार्थिकभेदाङ्गीकारे 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्रमपि विरुध्यते। तथाहि तत्त्वमसीत्याद्याः श्रुतयो मनो ब्रह्मेतिवत्प्रतीकोपासनापरा इति प्राप्ते सूत्रम् अयमर्थः आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः तथाहि जाबालाः 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि देवते' इति ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा सर्वान्तरः' इति, प्रतीकोपासनापरत्वं तु न संभवति यत्र प्रतीकदृष्टिरभिप्रेयते तत्र सकृदेव वचनं भवति यथा 'मनो ब्रह्मेति' इह तु त्वमहमस्मि अहं च त्वमसीत्याह। किंच प्रतीकोपासनायां भेददर्शननिन्दा न भवति इह तु 'मृत्योः स मृत्युमाप्नोति' इति भेददर्शननिन्दापि। नच प्रत्यक्षविरोधः प्राक् प्रबोधात्संसारित्वाभ्युपगमात्। मध्वभाष्ये तु 'आत्मेत्येवोपास्स्व आत्मन्येव विजानीहि नान्यं किंचन' इत्येव ग्राहयन्ति, इति व्याख्यातम् तच्च नान्यं किंचनेत्युक्तयाऽद्वैतवादे एव समञ्जसम्।

एवं 'पत्युरसामञ्जस्यात्' २।२।३७। इत्यधिकरणे ईश्वरस्य प्रधानपुरुषयोरीशितृत्वं न संभवति संबन्धाभावात् न तावत्संयोगः प्रधानपुरुषेश्वराणां निरवयवत्वात् नापि समवायः आश्रयाश्रयिभावानिरूपणात् नापि कार्यगम्यः कश्चित्संबन्धः कार्यकारणभावस्याद्याप्यसिद्धेः। ब्रह्मवादिनस्तु तादात्म्यलक्षणः संबन्धः संभवति। इत्यनेन केवलनिमित्तकारणत्वं ब्रह्मणो निराकृतम्। मध्वभाष्ये तु पत्युः शिवस्य जगत्कर्तृत्वं न संभवति परतन्त्रत्वादिति व्याख्यातम् तच्चायुक्तं नारायणस्यापि कर्तृत्वानापत्तेः श्रुतौ पुराणेषु च विष्णोः शिवपरतन्त्रत्वावगमात् यथा चैतत्तथाग्रे वक्ष्यते।

एवमन्यस्य मिथ्यात्वे उपदेशो न घटते इति शङ्कायां 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' १।१।३० इति। माध्वस्य तु अन्यस्य सत्यत्वात्सूत्रानुत्थितिरेव स्यात्।

एवं माध्वः आत्मनोऽणुत्वमङ्गीकरोति तच्च 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' २।२।२९ इति सूत्रेण विरुद्धम्, नच वालाग्रशतभागस्य इति आराग्रमात्रोह्यवरोऽपि इति च श्रुतिरात्माणुत्वे मानमिति वाच्यम् स चानन्त्याय कल्पते इत्यनेन बुद्धेर्गुणेन आराग्रमात्रः आत्मगुणेन अवरो महान् इत्यर्थेनं चाणुत्वासिद्धेः।

एवम्-'आभास एव च' 'अत एव चोपमा सूर्यकादिवत्' ३।२।१८ सूत्रे 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति स्मृतिश्च विवर्तवादे एव संगच्छन्ते।

तस्मात् माध्वाभिप्रेतं ब्रह्मणोऽनुपादानकरणत्वं जगत्सत्यत्वं जीवस्याणुत्वं च व्याससूत्रविरुद्धम्।

किञ्च मध्वाभिमता सदेहस्य विष्णुलोकप्राप्तिरूपा तारतम्यवती मुक्तिः 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्या परसंपदुत्कर्षो हि हीनसंपदं पुरुषं दुःखाकरोतीति तर्केण च दुःखानुषक्ता स्वर्गविशेष एवेति नैतन्मते मोक्षसंभवः एवं विष्णोरप्राकृतशरीराङ्गीकरणमपि विष्णोर्दुःखित्वापादकतया तुच्छम्।

## अद्वैतवाद एव व्यासतात्पर्यम्।

एभिः प्रमाणैरद्वैतवादस्य व्याससूत्राभिप्रेतत्वं मध्वमतस्य च तदनभिमतत्वं स्फुटम्। यत्तु 'व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे। अद्वैतमेव सूत्रार्थं प्रमाण्येन करिष्यति॥ अविमुक्ते समासीनं व्यासं वाक्यैर्विजित्य च। इति शिवरहस्यान्नाद्वैतवादस्य व्यासाभिप्रेतत्वमिति माध्वःतदसत् द्वैतवाक्यात्मनां सूत्राणामद्वैतमेवार्थं करिष्यति अद्वैतात्मनां तु तत्सिद्धमेवेत्यभिप्रायात् व्यासशास्त्रार्थस्तु अद्वैतपक्षस्य साधक एव यतः वेदव्यासेन स्वयमेव 'त्वमायुषाऽनेन विरोधिवादिगर्वाङ्कुरोन्मूलनजागरूकैः॥ वाक्यैः कुरुष्वोज्झितभेदबुद्धीनद्वैतविद्यापरिपन्थिनोऽन्यान्' इत्युक्तम् [ मा. शं. वि. ७ स ]।

यत्तु रामसुब्बाशास्त्रिणा द्वैतमतमेवाङ्गीकृतमिति ततोऽपि द्वैतमतं श्रद्धेयमिति तत्तु महदान्ध्यं कियन्तो वा मन्दा द्वैतमाश्रयन्ति किं वैदिकैरपि तथा भवितव्यम् यत उक्तं 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ इति। किं बहुना मध्वमतस्यावैदिकत्वं मध्वादिष्वसंभवादिति—सूत्रेण वेदव्यासः स्वयमाह।

## अद्वैतवादस्यैव श्रौतत्वम् ।

अहं ब्रह्मास्मि, तत्त्वमसि, आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति, इत्याद्याः श्रुतयः जीवस्यैव ब्रह्मत्वबोधिकाः, मृत्तिकेत्येव सत्यम्, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्, नेह नानास्ति किंचन, ऐतदात्म्यमिदं सर्वम्, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, मृत्योः स मृत्युमाप्नोति, इत्याद्याः श्रुतयो जगतो ब्रह्मविवर्तताबोधिकाः, नच सर्वपदस्य सर्वान्तर्यामिणि लक्षणामङ्गीकृत्य सर्वान्तर्यामि ब्रह्मेत्यर्थः श्रुतीनामिति वाच्यम् लक्षणायां मानाभावात् भेदनिन्दाश्रुतिविरोधाच्च । विश्वं सत्यमिति श्रुतिस्तु परमार्थसत्यतातिरिक्ताऽर्थक्रियाकारित्वदर्शनात् व्यावहारिकसत्यतामादायोपपादनीया । तथाच श्रुतिः सत्यं चानृतं च सत्यमभवदिति । यत्तु माध्वोऽद्वैतिनो वेदो मिथ्येति वदन्तीति तदसत् व्यवहारदशायां अद्वैतिभिर्वेदस्य सत्यताङ्गीकारात् तथाच शंकराचार्याः 'वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयतामात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्' इति । परमार्थदशायां तु 'अत्र पिताऽपिता भवति वेदा अवेदाः' इति श्रुत्यैव वेदस्य मिथ्यात्वबोधनेन किमपराद्धमद्वैतवादिभिः । तथा— 'अज्ञानेनावृतं ज्ञानम्' 'अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम्' 'आसीदिदं तमोभूतम्' 'तरति शोकमात्मवित्' इत्यादयः जगतः कल्पितत्वं वदन्ति । न च सत्यतैकविधैवेति भ्रमितव्यम् आकाशघटादौ 'सत्यं चानृतं च सत्यमभवत्' इति श्रुत्या व्यावहारिकसत्यतायाः, 'सत्यस्य सत्यमि'ति श्रुत्या ब्रह्मणः पारमार्थिकसत्यतायाः शुक्तिरजतादौ प्रतिभासिकसत्यत्वस्य चावगमात् तदुक्तं संक्षेपशारीरके' आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या । तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ इति । एतेनैकविधमेव सत्यत्वमिति माध्वोक्तमपास्तम् ।

## पुराणान्यप्यद्वैतपराणि ।

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्युक्त्या 'वेदान्तानामद्वैत एव तात्पर्यमिति पुराणादिभिर्निर्णीयते तथाच—विष्णुपुराणम् ।

तस्मान्न विज्ञानमृतेऽस्ति किंचित्कचित्कदाचिद् द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदाद्विभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकः सदैकः परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोऽहमित्येतद्विफलं वचः ॥ सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥ सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् । इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥ सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥ विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ परात्मनो मनुष्येन्द्र विभागोऽज्ञानकल्पितः । क्षये तस्यात्मपरयोर्विभागोऽभाग एव हि ॥ एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥ परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न योगवान् न युक्तोऽभूत् नैव पार्थिव योक्ष्यते ॥ तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत् । विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥ वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथासौ परमात्मनः ॥ ज्ञानस्वरूपी भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्तो मोहसंप्लवे ॥ निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् । आत्मसंबोधविषयं सत्तामात्रमगोचरम् ॥ यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो

वक्तुमेवमपीष्यते ॥ यदा समस्तभूतेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोऽहमित्यादि विफलं वचः ॥ प्रत्यस्मितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः । तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ इति । बृहद्याज्ञवल्क्यः—आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैकोऽप्यनेकेषु जलाधारेष्विवांशुमान् ॥ इति ॥ योगियाज्ञवल्क्यः—निश्चरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः । सकाशादात्मनस्तद्वत्प्रभवन्ति जगन्ति हि ॥ इति ॥

भागवते—अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः । अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥ 'अयं द्वितीयाभिनिवेशतः' अविद्यमानोऽपि विभाति च द्वयः' इत्यादीनि, गीतायां वासुदेवः सर्वमिति' 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम' 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' 'सर्वभूतेषु येनैकं भावमव्ययमीक्षते '. 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।' ' अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ' 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इमानि च वचनानि भगवज्ज्ञानस्य बन्धनिर्वर्तकत्वं वदन्ति बन्धस्य विवर्तत्वमवगमयन्तीति अद्वैतवाद एव संभवन्ति । एतेनाद्वैतिनो ब्रह्मणः सत्यत्वमसत्यत्वं च नाङ्गीकुर्वन्तीति माध्वोक्तं परास्तम् गीतायामेव ब्रह्मणः सत्ताया असत्तायाश्च निषेधादिति अद्वैतवाद एव श्रुतिस्मृतिपुराणब्रह्मसूत्रगीतानां तात्पर्यं द्वैतवादस्तु द्वैतिनोऽतथ्यदर्शिनः' 'अबुद्धयः' 'अयोनयः' इत्यादिना तत्र तत्र निराकृत इति सर्वं समञ्जसम् ।

दार्शनिका अपि वेदान्तमतखण्डनावसरे औपनिषदिकाः वेदान्तिनः इत्यादिशब्दैः अद्वैतमतमेव परामृशन्ति कपिलादिभिरपि सांख्यसूत्रे प्रथमाध्याये वेदान्तिमतखण्डनावसरे अद्वैतमतमेव परामृष्टम् इत्यलमतिप्रसङ्गेन ।

## भस्मधारणम् ।

भस्मजाबालकालाग्निरुद्रजाबाल्युपनिषत्सु भस्मनिर्माणप्रकारः

तद्धारणस्य स्थानानि मन्त्राश्च वर्णिताः। भस्म चेदं वैदिकब्राह्मणै-रवश्यं धार्यम् 'भस्मधारणं विना गायत्रीं न जपेदि'ति श्रुतेः।

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने सꣳसृज्य।
मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥ [यजुर्वेद १२।३८]

हे अग्ने त्वं भस्मना कृत्वा योनिं कारणभूतां पृथिवीं योनिभूता अपश्च प्रसद्य प्राप्य मातृभिरद्भिः संसृज्यैकीभूय ज्योतिष्मान् तेजस्वी सम्पन्नः सन् पुनरासद स्वस्थानमुखमासीद इत्यर्थः। अयं मन्त्रश्च 'अनामिकया प्रास्तादादत्ते प्रसद्येति का० १६।६।२६ सूत्रेण भस्मधारणे विनियुक्तः। एवं 'त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति 'शन्तमांभूतिं' नर्या जिगायत। तनामोजिष्ठां देवहितां च ऋत्विजः' इति, मन्त्रोऽपि भूतिधारणे विनियुज्यते, न च विधिपदाघटितत्वात्कथमस्य विनियोजकत्वमिति वाच्यम् श्रुतिलिङ्गवाक्येति सूत्रेण लिङ्गस्यापि विनियोजकताया मीमांसायां स्थापितत्वात्।

अत एव विधिप्रत्ययाभावेऽपि भगवता बौधायनेन 'शुचीवो हव्या' इति मन्त्रेण 'शुचिना कर्म कर्तव्यम्' इत्युक्तम्। महाभाष्येऽपि 'चत्वारिꣳश्रृङ्गा' इति मन्त्रमुक्त्वा व्याख्याय चान्ते तस्मादध्येयं व्याकरणमित्युक्तम्।

किंच 'अग्निरिति भस्म' इत्यादिमन्त्राणां 'अग्निरित्यादिभिर्मन्त्रैः शुद्धैर्भस्माभिमन्त्रितम्। शिवमन्त्रेण वा धार्यं मन्त्रेणाष्टाक्षरेण वा ॥ गायत्र्या वापि देवर्षे मन्त्रेण प्रणवेन वा।' इत्यनेन भस्मधारणे पुलस्त्यो विनियोगमाह।

अत एव—भस्मना च त्रिपुण्ड्रं च कोऽपि धारयते परम्। स ब्रह्मलोकमवाप्नोति मुक्तपापो न संशयः ॥—देवीभागवते [१४-१५ अ०] सत्याद्धर्मादपि कुलात्सद्भस्मोद्धूलनादपि। त्रिपुण्ड्रधारणाच्चैव सदा न प्रच्युतो भवेत ॥ यथाऽधीत्यान्त्यजो वेदान् प्रत्यवैति तथा द्विजः। प्रत्यवैति न संदेहः सन्ध्याकृद्भस्मवर्जितः ॥—सूतसंहितायाम् सर्वकर्मबहिर्भूतो भस्मधारणवर्जितः। भस्मना रहितं कर्म वृथा भवति सर्वदा।—शिवरहस्ये। महापातकयुक्तानां पूर्वजन्मसु सर्वतः।

त्रिपुण्ड्रोद्धूलने द्वेषो जायते सुदृढं बुधाः ॥ सनत्कुमारसंहितायां चोक्तम् ।

'प्रतिमन्त्रमिति' पारस्करगृह्यसूत्रेण त्र्यायुषमन्त्राः भस्मधारणे विनियुक्ताः किं बहुना मध्वभाष्ये स्वतः प्रमाणतयाऽभिप्रेते पद्मपुराणपातालखण्डे शिवराघवसंवादे भस्मशब्दार्थनिर्वचनं भस्मनो वैदिकब्राह्मणावश्यधार्यत्वं च प्रतिपादितम् किं बहुना विष्णुरपि भस्मधारणं कृत्वैव जगद्गुरोर्महेशाज्ज्ञानमवाप्तवान् । एवं शिवपुराणे विश्वेश्वरसंहितायां २१।२४।२५ अध्यायेषु भस्मधारणस्यावश्यकत्वं प्रतिपादितम् । रुद्राक्षधारणस्य निन्दापरं तु एकमपि वचनं माध्वेन नोपन्यस्तमिति तद्विषये रुद्राक्षजाबालोपनिषदेव द्रष्टव्येति नास्माभिरपि किंचित्प्रयत्यते इति । यच्च माध्वस्य भस्मजाबालोपनिषदादीनामवेदत्वकथनं तत्तु श्रुत्युच्छेदकत्वधर्मस्य सौरपुराणोक्तस्य स्वस्मिन्नाम्रेडनमात्रमित्यलम् ।

## शिवनिर्माल्यभक्षणविचारः ।

शृणुध्वं निर्णयं विप्राः शिवनैवेद्यभक्षणे ।
शालग्रामोद्भवे लिङ्गे रसलिङ्गे तथा द्विजाः ॥
पाषाणे राजते स्वर्णे सुरसिद्धप्रतिष्ठिते ।
काश्मीरे स्फाटिके रत्ने ज्योतिर्लिङ्गेषु सर्वशः ॥
चान्द्रायणसमं प्रोक्तं शिवनैवेद्यभक्षणम् ।
चण्डाधिकारो नो यत्र भोक्तव्यं तच्च भक्तितः ॥
बाणलिङ्गे च लौहे च सिद्धलिङ्गे स्वयंभुवि ।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥

ज्योतिर्लिङ्गानि—

सौराष्ट्रे सोमनाथश्च श्रीशैले मल्लिकार्जुनः ।
उज्जयिन्यां महाकालः ओङ्कारे चामरेश्वरः ॥
केदारो हिमवत्पृष्ठे डाकिन्यां भीमशंकरः ।
वाराणस्यां च विश्वेशस्त्र्यम्बको गौतमीतटे ॥

वैद्यनाथश्चिताभूमौ नागेशो दारुकावने ।
सेतुबन्धे च रामेशो घुश्मेशश्च शिवालये ॥
अवतारद्वादशकमेतच्छम्भोः परात्मनः ॥

इति शिवपुराणवचनैरेतादृशं नैवेद्यं भक्षणीयमिति विदुषां परामर्शः ।

ननु निर्माल्यमुत्कर्षतः कपिलाक्षीरपानं शूद्रादेरिव केषांचिन्निषिध्यते अथ अपकर्षतो लशुनादिभक्षणं ब्राह्मणादेरिव निषिध्य इति चेदुच्यते शिवनिर्माल्यं सकलपापहरत्वादिसर्वोत्कृष्टगुणशालीति 'पादोदकं च निर्माल्यं भक्त्या धार्यं प्रयत्नतः । न तं स्पृशन्ति पापानि मनोवाक्कायजान्यपि ॥ स्वेष्टलिङ्गे च यद्दत्तं चरुवत्तन्न संशयः । राजसूयसहस्रस्य फलं प्राप्नोति नारद ॥ पृथूदकं महातीर्थं गङ्गा च यमुना नदी । नर्मदा सरयूर्विप्रास्तथा गोदावरी नदी । शम्भोस्स्नानोदकं सेव्यं सर्वतीर्थमयं हि तत् ॥ इति पुराणात्, निर्माल्यसलिलं प्राश्य देवदेवस्य शूलिनः । क्षयकुष्ठज्वरश्वासैर्मुच्यते किल्बिषैरपि ॥ इति वैद्यशास्त्रात्, तत्र देवर्षिगन्धर्वा वसुधातलवासिनः । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ इति रामायणात्, किंवा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तदवकीर्य जटाः श्मशाने । तन्माल्यभस्मनृकपालगभस्तिभिर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् । इति भागवताच्चावगम्यते । एवं च परमपावनस्य शिवनिर्माल्यस्य 'नधारयेत्कंचिच्छम्भोर्निर्माल्यं न च भक्षयेदित्यादीनि स्पर्शस्य निषेधकानि शिवलिङ्गस्पर्शस्य कपिलाक्षीरपानस्य वा शूद्रादेरिव केषां चिदनधिकारितया नतु शिवनिर्माल्यस्यापकर्षवत्तया प्रवृत्तानीति । तथा च—निर्माल्यं निर्मलं शुद्धं निर्मलत्वादनिन्दितम् । तस्मादभोज्यं निर्माल्यमशुभैरशिवात्मभिः ॥ जिह्वाचापल्यसंयुक्तः शिवसंस्कारवर्जितः । शिवनिर्माल्यभोजी चेद्रौरवं नरकं व्रजेत् इति शिवपुराणम् । एवंभूतं शिवनिर्माल्यं छिन्नपाशानां वैदिकब्राह्मणानां शिवभक्तानामेव भोज्यम् । नहि ब्रह्महत्यादिमहापातकहरमघमर्षणादिवैदिकसूक्तं वेदश्रवणेऽप्यनधिकारिणां शूद्राणामुच्चारणश्रवणायोग्यं स्वापकर्षवत्तया किन्तु तेषामनधिकारितयैव । अत एव-अशुद्धात्माऽशुचिर्लोभान्मद्भुक्तं पावनं परम् । भक्षयन्नाशमाप्नोति शूद्रो ह्यध्ययनादिव ॥ इति पुराणवचनमिति सर्वमवदातम् ।

## पौराणिकभस्मनिन्दाविचारः ।

यच्च—माध्वः वैदिकभस्मधारणस्य निन्दितत्वबोधनाय—कपाल-भस्मास्थिधराः ये ह्यवैदिकलिङ्गिनः । अवैदिकक्रियोपेतास्ते वै पाखण्डिनः स्मृताः ॥ इति वचनं, पार्वत्या— कपालभस्मचर्मास्थि-धारणं श्रुतिगर्हितम् । तत्त्वया धार्यते देव गर्हितं केन हेतुना ॥ इति पृष्टो रुद्रो भगवताऽऽज्ञप्तः असुराणां मोहनाय कपालभस्मास्थि धारणं करोमि इत्युक्तवानिति कथानकं—भस्मादिधारणं कृत्वा महोग्रतपसावृताः । मामेव पूजयांचक्रुर्मांसासृक्चन्दनादिभिः ॥ इति वचनं चोपन्यस्तवान् सोऽयमस्थानेऽस्य प्रयासः । तथाहि एषु वचनेषु कपालभस्मास्थिधरा इति पदेन कापालिकस्य 'अवैदिकलिङ्गिन' इत्यनेन तप्तशङ्खचक्रधरस्य माध्वस्य च पाखण्डित्वप्रतिपादनात् वैदिका भस्मत्रिपुण्ड्रधरा नैतद्वचनविषयाः । भस्मादिधारणमिति वचनेऽपि आदिपदेनास्थ्यादेः संग्रहात् समुदितकपालभस्मादिधार-णस्य निन्दितत्वेऽपि शुद्धभस्मधारणस्यानिन्दितत्वात् । ननु शिवस्य निषिद्धधारित्वमनुचितमिति चेद्धरेरपि परस्त्रीगमनं वराहावतार-धारणं वा कथमुचितम् तेजीयसां न दोषाय वह्नेः सर्वभुजो यथेति समाधानं तु भगवति भवेऽपि तुल्यम् । यश्च पद्मपुराणीयो भागव-तीयो वा भृगुशापः सोऽपि जटाभस्मास्थिधारिणः भस्मलिङ्गास्थि-धारिणश्चोद्दिश्य प्रवृत्ततया कापालिकानेव विषयीकरोति न वैदिक-त्रिपुण्ड्रधारिणः । एवं गौतमशापोऽपि ।

एतेन काञ्चीस्थप्रतिवादिभयंकराचार्यश्रीमदनन्ताचार्यस्वामिभिः प्रणीतो भस्मधारणविचाराख्यग्रन्थोऽपि निराकृतो वेदितव्यः । यच्च तत्र 'उच्छिष्टकेशभस्मास्थिकपालं मलमेव च । स्नानार्द्रधारणी चैव स्पृष्ट्वा स्नानं समाचरेत्' इति हारीतवचनं भस्म ज्येष्ठादेवीस्थान-मित्यर्थकं पद्मपुराणं चोपन्यस्य भस्मनिन्दनं तत्त्वसंगतम् अमेध्यप्रभ-वभस्मविषयकत्वस्यैव पूर्वोक्तप्रमाणैस्तेषां वचनानां कल्पनीयत्वात् ।

## अद्वैतवादे सूत्रविरोधपरिहारः ।

'नाभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नवत्' इत्यादिसूत्राणि

'विज्ञानस्यैवायमाकारविशेषो बाह्योऽर्थः न तु बाह्यं नाम किंचिदस्ति तच्च विज्ञानं क्षणिकम्' इति क्षणिकविज्ञानवादियोगाचारमतखण्डनपरतया 'एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्चे' त्यन्तेन ग्रन्थेन व्याख्याय वर्णकान्तरेण ' शून्यवादिपक्षस्त्वित्यादिना ' शून्यवादखण्डनपरतया भगवत्पादैर्व्याख्यातानि। 'स्यादेतदित्यादिना विचारासहत्वमेव तत्त्वं वस्तूनाम्' इत्यन्तेन ग्रन्थेन भामतीकृता सूचितोऽयमर्थः; 'वर्णकान्तरमधिकरणस्य दर्शयन् पूर्वपक्षमाह स्यादेतदिति, नादरः क्रियते—सूत्रान्तराणि न रच्यन्ते एतान्येवावृत्त्या योज्यन्ते' इति ग्रन्थाभ्यां स्पष्टीकृतः कल्पतरुकृता, ज्ञानज्ञेयात्मकस्य सर्वस्य सत्त्वासत्त्वाभ्यां विचारासहत्वाच्छून्यतावशिष्यते इति माध्यमिकमतं किमिति सूत्रकारो न निराचकारेत्यत आह—शून्यवादीति आदरः पृथक् सूत्रारम्भः न क्रियते एतान्येव तन्निरासार्थत्वेनापि योज्यन्त इत्यर्थः' इति रत्नप्रभाकृता च। शून्यवादिपक्षस्त्वित्यादि भाष्यं व्याख्यायते तथाहि शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्धः इति तन्निराकरणाय नादरः क्रियते न ह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्' इति हि शाङ्करभाष्यम्, नादरः क्रियते इत्यत्र सूत्रकृता इति शेषः शून्यवादखण्डनपरां युक्तिमाह—न ह्ययमित्यादिना अन्यत्तत्त्वमित्यस्य 'निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनाऽऽरोप्यते तच्च तत्त्वं व्यवस्थाप्य अतात्विकत्वेन सांव्यावहारिकत्वं प्रमाणानां बाधकेनोपपद्यत इत्यर्थो भामतीकृता कृतः तथा च न सर्वशून्यत्वसिद्धिः कस्यचित्तत्त्वस्याङ्गीकारादिति भावः। एतदेव 'सद्रूपाद्ब्रह्मणो जगत्सृष्टिं प्रतिपादयतां वेदान्तानां सर्वमसत् तर्कपीड्यत्वादित्यनेन विरोधाशङ्कायां सूत्रं ' नाभाव उपलब्धेः ' सतो ब्रह्मणो नाभावः उपलब्धेः सत्त्वेन प्रमाणात्प्रतीतेः तथा च किंचित्तत्त्वं शून्यवादिनाऽप्यवश्यमभ्युपेयम् अन्यथा बाधो निस्साक्षिकः निरवधिकश्च स्यादिति वैधर्म्याच्चेति तु शून्यवाद्यनुमाने उपाधिप्रदर्शनाय' इति माध्वभ्रान्तिनिरासे मयोक्तम्।

एवं स्थिते शङ्कराचार्योक्तादर्थादर्थान्तरवर्णनेन सूत्रविरोधपरिहरणं शङ्कराचार्योक्तार्थे सूत्रविरोधसमर्थकमित्यनाघ्रातशास्त्रगन्धस्य माध्वस्याभिधानम् केवलमुपहासायैव। भाष्याक्षरैरेव लब्धेनार्थेन विरोधपरिहारात्।

यच्च अद्वैतिमते शुद्धब्रह्मणः प्रमाणाविषयतया सत्त्वेन प्रमाणात्प्रतीतेरिति हेतोरसिद्धिरिति तदसत् फलव्याप्यतायाः शुद्धब्रह्मण्यनङ्गीकारेऽपि वृत्तिव्याप्यतायाः स्वीकारेण हेतोरसिद्धत्वाभावात् उक्तं च 'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतमि'ति निरूपितं चैतन्माध्वभ्रान्तिप्रकाशे नावगतमिदं माध्वोलूकेनेति महदाश्चर्यं किं वा स्फीतालोकवर्तिनमपि घटं सवितरि ( सूर्यनारायणे ) प्रकाशमाने उलूको न पश्यतीतिविधिविलसितमेतत् । अद्वैतिनो हि—'अप्रमेयमनादिं च' 'न सत्तन्नासदुच्यते' इत्यादिप्रमाणैरप्रमेयत्वं ब्रह्मणो वदन्ति माध्वस्तु प्रमेयं वदन् वेदवाह्य एव नितरां गर्हणीयः ।

यच्च अद्वैतिमतेऽपि साक्षिणोऽविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपतया मिथ्यात्वेन बाधस्य निस्साक्षिकत्वमेवेति तन्न 'साक्षी चेता केवलो निर्गुणश्चेति' श्रुत्या 'अन्तःकरणोपहितं चैतन्यं मायोपहितं चैतन्यं च साक्षि' इति 'अज्ञानोपहितः अज्ञानतादात्म्यापन्नः स्वचिदाभासविवेकादन्तर्यामी साक्षी जगत्कारणमिति च कथ्यते' इति निबन्धैश्च शुद्धब्रह्मणः साक्षितया मिथ्यात्वायोगात् ।

यच्च शून्यवादिना शून्यस्य परमार्थसत्त्वं ज्ञानरूपत्वं चाङ्गीक्रियते इति तदपि न बौद्धग्रन्थैरेव शून्यस्य सत्यतायाः ज्ञानरूपताया-श्चानवगमस्य पूर्वमेवोक्तत्वात् ।

यच्च विमतं निस्तत्त्वं तर्कपीड्यत्वादित्यनुमाने वैधर्म्याच्चेति सूत्रबोधितः बाध्यत्वमुपाधिर्न संभवति बाह्ये जगति बाध्यत्वरूपोपाधेः सत्त्वेन तदन्तर्भावेण साधनाव्यापकत्वस्यायोगादिति तदतितुच्छम् जगतो बाध्यत्वं परमार्थदशायाम् उपाधिश्च व्यवहारदशाबाध्यत्वरूप इति बाह्यान्तर्भावेण साधनाव्यापकत्वस्य सौष्ठवात् एवं च किंचित्तत्वमनभ्युपगम्य जगन्मिथ्यात्वसाधनाय प्रवृत्तशून्यवादिनोऽनुमानस्य दुष्टत्वेऽपि श्रुत्या तदुपबृंहितानुमानेन च किंचित्तत्त्वमभ्युपगम्य जगन्मिथ्यात्वं साधयतोऽद्वैतिनो बाधकाभावेन जगन्मिथ्यात्वसिद्धया शून्यवाद्यनुमाने खण्डिते प्रच्छन्नचार्वाकस्य लोकानुरोधेन श्रुतिमन्यथयितुं प्रवृत्तस्य जगत्सत्यत्ववादिनो माध्वस्य जगत्सत्यत्वसिद्धिप्रत्याशा दूरापास्ता ।

यदा च विज्ञानवादिनिराकरणपरे सूत्रे तदा विमता धीर्न ज्ञानव्यतिरिक्तालम्बना धीत्वात् स्वप्नधीवत् इत्यनुमाने बाधप्रदर्शनाय नाभाव उपलब्धेरिति सूत्रम् वैधर्म्यसूत्रं च बाध्यत्वरूपोपाधिप्रदर्शनायेत्युक्तं

मया माध्वभ्रान्तिनिरासे न चायं सूत्रार्थः स्वकपोलकल्पितो न भाष्यारूढ इति माध्वभ्रमो युक्त इति वाच्यम् जाग्रद्विज्ञानं बाह्यालम्बनमित्यनुमाने 'किं निर्विषयत्वं पारमार्थिकविषयशून्यत्वं व्यावहारिकविषयशून्यत्वं वा साध्यते नाद्यः स्वप्नादिविभ्रमाणामपि मिथ्यार्थालम्बनत्वेन दृष्टान्ते साध्यवैकल्यात् न द्वितीयः सिद्धसाधनादिति सूत्रस्थचकारार्थः तृतीये व्यवहारदशायां बाधितार्थग्राहित्वमुपाधिरित्याह-स्वप्नोपलब्धं वस्तु इति। साधनव्यापकत्वनिरासायाह-न चैवं जागरितोपलब्धमिति रत्नप्रभाटीकायामुपाधिप्रदर्शनपरत्वेन भाष्यस्य व्याख्याततया माध्वभ्रमस्यात्यन्तं निरासात्। तथा उक्तोपाधिरपि न विस्मर्तव्यः इत्याह-दर्शितं त्विति अग्रेऽपि रत्नप्रभायां सूत्रमिदं उपाधिपरतया व्याख्यातम् एवं स्थिते सूत्रमिदमुपाधिपरत्वेन भाष्ये न व्याख्यातमित्यभिधानं माध्वस्य न ह्येष स्थाणोरपराधो न यदेनमन्धो न पश्यतीति न्यायं स्मारयति। तथा चाहुः 'बाधेन सोपाधिकतानुमाने उपायभावेन सहोपलम्भः। सारूप्यतो बुद्धितदर्थभेदः स्थूलार्थभङ्गो भवतोऽपि तुल्य इति। अत एव तार्किकसार्वभौमेन न्यायाचार्येणोदयनाचार्येण विज्ञानवादिदूषणोपसंहारे 'न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः। नो चेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः' इति 'प्रविश वाऽनिर्वचनीयख्यातिं तिष्ठ वा मतिकर्दममपहाय नीलादीनां परमार्थिकत्वे' इति ग्रन्थेन अद्वैतमतस्य सर्वश्रेष्ठत्वमुक्तम्। विवृतं चैतच्छिरोमणिना 'ग्राह्याणां नीलधवलादीनां हि भेदात् प्रतिनियततद्विषयकज्ञानानां भेदसिद्धिः ग्राह्यभेदबाधने च ज्ञानभेदे साधकस्य प्रतिनियतविषयकत्वस्याभावात् क्षणिकविज्ञानधाराकल्पने गौरवात् एकत्वे च लाघवात् बलवती चौपनिषदे जयश्रीः 'एकमेवाद्वितीयं' 'सत्यं विज्ञानं' 'आनन्दो ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युपनिषदो नित्यमद्वितीयं ज्ञानं प्रतिपादयन्ति' इति। श्रुतिश्च सर्वतो बलवतीति न तत्र प्रत्यक्षादिविरोध आशङ्कनीय इति तदाशयः। न चैवं क्षणिकविज्ञानातिरिक्तबाह्यजगन्मिथ्यात्वमते दूषिते नित्यविज्ञानातिरिक्तबाह्यजगन्मिथ्यात्ववादिस्वमतमपि दूषितमिति वाच्यम् विज्ञानवादे ज्ञानविषयतत्तादात्म्यानामेकजातीयसत्ताङ्गीक्रियते औपनिषदमते च नीलतादात्म्यमनुभवनिष्ठमपि नानुभवसमानसत्ताकम् एवं च नीलाद्याकारविज्ञानवादस्य खण्डनेऽपि रूपरहितब्रह्मोपादानत्ववादस्य न

खण्डनमित्यदोषात् तदुक्तं 'तस्मान्न ज्ञानाकारोऽर्थः किन्तु बाह्यः स चार्थक्रियाकारित्वोपेतोऽपि अद्वैतश्रुतिवशात् ब्रह्मणि कल्पितो न परमार्थसन् इति सिद्धान्तस्य सुगतमताद्भेदः' इति ।

## माध्वस्य जैनत्वं चार्वाकत्वं शून्यवादिता च ।

आर्हताः ( जैनाः ) हि तप्तशिलारोहकाः बद्धमुक्तस्य शुकस्योर्ध्वगमनवदनादिकालप्रवृत्तबन्धविगमान्मुक्तस्य सततोर्ध्वगमनं, याज्ञिकपशुविशसनस्य निषिद्धत्वं, जगतः सत्यत्वं चातिष्ठन्ते, एवं माध्वा अपि तप्तशङ्खचक्रधराः मुक्तावूर्ध्वदेशगमनं याज्ञिकपशुविसशनस्य निषिद्धत्वं, जगतः सत्यत्वं, चातिष्ठन्त इति प्रच्छन्नजैना नग्ना मायावादिनश्च।

तदुक्तं विष्णुपुराणे तृतीयेंऽशे १७ अध्याये—'त्रयी समस्तवर्णानां द्विज ! संवरणं यतः । नग्नो भवत्युज्झितायां यतस्तस्यां न संशयः ॥ इति

दैत्यैः पीडिता देवा विष्णुशरणमुपगत्य भगवन् पाहीत्यब्रुवन् ततो विष्णुः स्वशरीरान्मायामोहमुत्पाद्य दैत्यान्मोहयितुं प्रहितवान् स च गत्वा दैत्यान्—स्वर्गार्थं यदि वो वाञ्छा निर्वाणार्थं महासुराः । तदलं पशुघातादिदुष्टधर्मैर्निबोधत ॥ केचिद्विनिन्दां देवानां वेदानामपरे द्विज ! । यज्ञकर्मकलापस्य तथान्ये च द्विजन्मनाम् ॥ अर्हतैतं महाधर्मं मायामोहेन ते यतः । प्रोक्तास्तमाश्रिता धर्ममार्हतास्तेन तेऽभवन् ॥ इत्यवोचत् । एवं च याज्ञिकपशुविशसनं निन्दन्तो यज्ञे पिष्टपशुविंशसनं च वदन्तः शकृल्लोहितनिरसनादेः कर्मकलापस्य निन्दकाः शिवनिन्दकाश्चेमे माध्वाः स्फुटं मायामोहमतानुगा जैना इति सिद्धम् । यदि पद्मपुराणीयं "दैत्यानां मोहनार्थाय विष्णुना बुद्धरूपिणा । बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ॥ मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ॥ कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते । सर्वधर्मपरिभ्रष्टं वैधर्म्यत्वं तदुच्यते ॥" इति वचनं प्रामाणिकं तदा विष्णुपुराणैकवाक्यतया प्रच्छन्नजैनान्माध्वानेव मायावादपदं विषयीकरोति । माध्वा वैदिकपशुविशसनस्य

त्यागान्नग्नाः नीलपटधारिणश्च । लोकगर्हितम् ननु श्रुतिगर्हितं पशुविशसनरूपं श्रुतिवाक्यानामपार्थं वेदविरुद्धं पिष्टपशुविशसनरूपं ब्राह्मणरूपिणा मध्वरूपिणा मया कथितम् हनूमतः शिवावतारत्वात्, कर्मस्वरूपस्य पशुविशसनादेस्त्याज्यता सर्ववेदविरुद्धो वैधर्म्यं जीवेशयोर्भेदश्च उक्तः, ननु तव किमभिमतमत आह—परेशजीवयोरैक्यं मया तु प्रतिपाद्यते। ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते तथा ॥ ननु जीवेशभेदस्यानभिमतत्वे मध्वदर्शने किमिति प्रतिपादितवानसि अत आह—सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे। वेदार्थवन्महाशास्त्रं मायया यदवैदिकम् ॥ इति अयमर्थः यद् अवैदिकं महाशास्त्रं पाञ्चरात्रादिकं मायया कपटेन वेदार्थवत् वेदवत् स्वतः प्रमाणतया प्रतिपादितं तल्लोकमोहनार्थमिति । एवं च विष्णुपुराणपद्मोत्तरखण्डयोरेकवाक्यतया विचारे क्रियमाणे माध्वा एव मायावादिनो वैदिकैर्नितरां गर्हणीया इति सिद्धम् ।

किंच माध्वाः करचरणादिसकलकर्मज्ञानेन्द्रियसहितदेहरूपस्य जीवत्वं तेनैव देहेन स्वप्ने मुक्तौ च व्यवहारं वदन्तो देहात्मवादिनः मुक्तावपि तारतम्यकृतं दुःखमनुभवन्तश्चार्वाकाः ।

'एष शून्य एष तुच्छ एष ह्यभावः' इत्यादिना १।४।२९ मध्वभाष्ये ईश्वरस्य शून्यरूपतां तुच्छतां च वदन्तो विष्णुद्रोहिणःशून्यवादिनश्चेति सिद्धम् ।

## ऊर्ध्वपुण्ड्राधिकारिणः ।

ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरस्रकम्। अर्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ॥ देवीभागवते, ऊर्ध्वपुण्ड्रं भ्रमेणापि नैव कुर्याद् द्विजः क्वचित । अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया तु यः ॥ शिवरहस्ये, तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः । वेदमार्गैकनिष्ठस्तु मोहनाप्यङ्कितो यदि ॥ वासिष्ठलैङ्गे, पतत्येव न संदेहस्तथा पुण्ड्रान्तरादपि। शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा। स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ बृहन्नारदीये, . . . . . .

संतप्तशङ्खचक्राद्यैर्लिङ्गैरङ्कितविग्रहम् । पश्यतो नरकप्राप्तिर्जायते नात्र संशयः ॥ [ नारदसंहिता ] शिवकेशवयोरङ्कान्छूलचक्रादिकान् द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥ [ इत्याश्वलायनः ] एभिः प्रमाणैरूर्ध्वपुण्ड्रधारणं तप्तमुद्राधारणं च व्रात्यानां वेदानधिकारिणां द्विजानां न वैदिकानामिति 'वेदनिष्ठो न धारयेत्' इत्यादि वाक्यैः सिध्यति । श्वेतमृदोर्ध्वपुण्ड्रधारणस्य यत्र क्वापि विहितत्वेपि कृष्णोर्ध्वपुण्ड्रस्य तु सर्वथाऽविहितत्वमेव । न च 'अतप्ततनुर्नतदामोऽश्नुते' इति श्रुत्या शङ्खचक्रादिधारणं वेदविहितमिति भ्रमितव्यम्, 'तपसा च तनुर्यस्य स तप्ततनुरुच्यते । वह्निनाप्तं तनुर्यस्य स दग्धतनुरुच्यते' इति कूर्मपुराणेन उक्तश्रुतेश्चान्द्रायणादितपःपरत्वावधारणात् ।

## पाञ्चरात्राद्यागमाप्रामाण्यम् ।

कौर्मे १४ अ०— कापालं पाञ्चरात्रं च यामलं वाममार्हतम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥ इति, वासिष्ठे लैङ्गे ९ अ०- पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने । केचिद्बौद्धं प्रशंसन्ति केचिद्दैगम्बरं मुने ॥ तान्येव श्रद्धया युक्ताः परिगृह्य द्विजातयः । आचरन्ति महापापा युगान्ते समुपस्थिते ॥ इति ॥ [ कूर्मे पू० १४ अ० ] गौतमशापः— भविष्यथ त्रयीबाह्याः महापातकिभिः समाः । सर्वे संप्राप्य देवेशं शङ्करं विष्णुमव्ययम् ॥ अस्तुवँल्लौकिकैः स्तोत्रैरुच्छिष्टा इव सौनिकाः । तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ॥ चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं लागुडं वामं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानपि सहस्रशः ॥ हेमाद्रौ श्राद्धखण्डे ब्रह्मवैवर्ते— बौद्धं धर्मं समास्थाय शाक्यास्ते तु बभूविरे । शैवाः पाशुपताश्चान्ये पाञ्चरात्रास्तथा परे ॥ पाशब्देन त्रयीधर्मः पालनाज्जगतः स्मृतः । ये खण्डयन्ति यस्मात्ते पाखण्डास्तेन कीर्तिताः ॥ स्कान्दे यज्ञवैभवखण्डे ३२ अध्याये गौतमशापः—

तज्ज्ञात्वा मुनिभिः श्रीमान् गौतमो मुनिसत्तमः । गौतम उवाच—
शङ्खचक्रगदापद्मदण्डपाशाङ्कुशादिभिः । अङ्किताः श्रद्धया यूयं भवेयुर्ब्राह्मणाधमाः ॥ बहुनोक्तेन किं साक्षाच्छिवे संसारमोचके । तत्संबन्धिषु सर्वेषु श्रुतिस्मृत्यादिकेषु च ॥ युष्माकं वंशजातानां युष्माकं च तथैव च । श्रद्धाऽभावः सदैवास्तु शापस्तीव्रः कृतो मया ॥ सौरपुराणे ७ अध्याये—दधीचिरुवाच— एते च ब्राह्मणाः सर्वे ये द्विषन्तो महेश्वरम् । भवन्तु वेदबाह्यास्ते तमोऽपहतचेतसः ॥ वामाः पाशुपताचारास्तथा वै पाञ्चरात्रकाः । भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा । पराशरपुराणे ११ अध्याये— शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः । आङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मणा ॥ हेमाद्रौ प्रायश्चित्तकाण्डे पद्मपुराणवचनम्— शृणु राम महाबाहो लिङ्गचक्रादिधारणम् । शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥ विप्रस्यैतद्विगर्हत्वात् प्रायश्चित्तमुदीरितम् । किं तत्र प्रायश्चित्तमिति चेदत्र हेमाद्रिः—वायुपुराणे— ब्राह्मणो यदि मोहात्मा तापयेद्वह्निमुद्रया । न कर्मार्हो भवेदत्र स वै पाखण्डसंज्ञकः ॥ नारदीये— ब्राह्मणस्य तनुर्ज्ञेया सर्ववेदमयी यतः । सा तु संतापिता येन किं वक्ष्यामि महौजसः ॥ चक्राङ्कितततनुर्विप्रो राजन् लिङ्गाङ्कितोऽपि वा । जपेच्च पौरुषं सूक्तमन्यथा रौरवं व्रजेत् ॥ लिङ्गपुराणे— चक्रशङ्खौ तापयित्वा यस्तु देहं समङ्कयेत् । सजीवकुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥ आदित्यपुराणे— देवेषु यज्ञभागेषु यो नेच्छेदधिकारिताम् । स तापयित्वा चक्रादीन् धारयेत्स्वभुजद्वये ॥ ब्राह्मणो यदि मोहेन धारयेत्तप्तमुद्रिकाः । तस्य दर्शनमात्रेण कुर्यात्सूर्यावलोकनम् । वह्निपुराणे— पूर्वजः स्वतनुं दग्ध्वा शङ्खचक्रादिभिः पृथक् । तस्य वै निष्कृतिर्नास्ति स्नानदानजपादिभिः ॥ तस्य निष्कृतिरुत्पन्ना पाराशर्येण चोदिता । केशानां वापयित्वाऽथ पुनः कर्म समाचरेत् ॥ गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्वकम् ।

षोढावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदीरयेत् । परिषदुपस्थानपूर्वकं षडब्दं कृच्छ्रान् कृत्वा शुद्धिमाप्नोति ॥' इत्याह । सूतसंहितायां मुक्तिखण्डे पाश्चरात्रादिमार्गेण वेदमूलत्वमास्तिके । नहि स्वतन्त्रास्ते तेन भ्रान्तिमूला निरूपणे ॥ इति ॥ अत्र 'पाञ्चरात्रादीनां तैः स्वयमेव वेदमूलतानङ्गीकारात् वेदविरुद्धानेकार्थप्रतिपादनाच्च सर्वथैवाप्रामाण्यमिति पराशरः' । 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि लोकोपसंग्रहे लाभख्यातिपराणि सांख्ययोगपाञ्चरात्रपाशुपतादिधर्मनिबन्धनानि तेषामेवैतच्छ्रुतिविरोधादिनाऽनपेक्ष्यत्वमुच्यते विरोधे त्वनपेक्ष्यं स्यादित्यनेनेति । [ भट्टपादाः ]

एवं स्थिते एभिः प्रमाणैः पाञ्चरात्रानुयायिनां माध्वानां वेदबाह्यत्वं पाखण्डित्वं 'पाखण्डिनो विकर्मस्थान् धर्माचार्यांस्तथैव च । पाञ्चरात्रान् पाशुपतान्वाङ्मात्रेणापि नार्चयेदिति' वचनविषयत्वं च स्थितम् । यच्च सात्त्विकादिभेदेन पुराणानां स्मृतीनां च व्यवस्थाकरणं तदसत् तथा सति वेदेऽपि रुद्राध्यायादीनां रुद्रमहत्वप्रतिपादकानां तामसत्वापत्तेः । किंच 'ज्ञानं महेश्वरादिच्छेदि' त्यनेनावगतज्ञानशक्तिमतो महेश्वरस्य सत्त्वप्राधान्यलाभात् । पद्मोत्तरखण्डवचनं तु कल्पितमवैदिकानां व्यामोहनार्थं वा । किंच तथा सति महर्षेः व्यासस्य असंबद्धप्रलापितापत्तेः । वस्तुतस्त्विमे माध्वादयः शूद्रानपि सप्रणवमन्त्रमुपदिशन्तो वेदविरुद्धाचरणाद्वेदबाह्या एव ।

न च पाञ्चरात्रस्य शान्तिपर्वणि ३३९-३४९ अध्याययोः प्रशंसनात्प्रामाण्यमिति वाच्यम् 'संस्थिते तु नृपे तस्मिञ्शास्त्रमेतत्सनातनम् । अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥ इति तदुत्तरग्रन्थेन उपरिचरनृपस्य नाशानन्तरं पाञ्चरात्रस्य लुप्तत्वकथनेन सांप्रतमुपलभ्यमानस्य कल्पितत्वेन प्रामाण्यालाभात् अत एव—कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते । त्रेतायां यज्ञरूपेण पाञ्चरात्रैस्तु द्वापरे ॥ इति वाराहपुराणवचनं ( ७० अ० २४ श्लो० ) संगच्छते ।

ननु शान्तिपर्वणि ३४८ अध्याये षट्सु कल्पेषु पाञ्चरात्रस्याविर्भावतिरोभावौ प्रतिपाद्य सप्तमे कल्पे आविर्भूतस्य प्रलयान्तं स्थितिप्रतिपादनेन नारायणमुखोद्गतमेवेदं न कल्पितमिति चेदत्रोच्यते अध्यायशेषे 'कृष्ण एव हि लोकानां भावनो मोहनस्तथा । संहार-

कारकश्चैव कारणं च विशांपते' इत्यनेन कृष्णैकत्वे प्रतिपादिते 'सांख्यं योगं पाञ्चरात्रं वेदारण्यकमेव च । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ॥ इति जनमेजयप्रश्ने 'सांख्यं योगं पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै' इति भिन्ननिष्ठत्वं प्रतिपाद्य भिन्ननिष्ठताभिमानो मूढानामिति 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ॥ न चैनमेवं जानन्ति तमोभूता विशांपते । इत्यनेनाभिधाय 'सर्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणमि' त्यनेन 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदं सर्वम्' 'इदं विश्वं नारायणः' इति श्रुतिप्रतिपादितब्रह्माद्वैतवादं समर्थयन् 'पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै इत्यनेन ब्रह्माद्वैतदर्शिनः पाञ्चरात्रविदः प्रशंसां वैशम्पायनश्चकार कूर्मपुराणादिवचनानि तु भेददर्शिपाञ्चरात्रनिन्दापराणि । एवं पुरुषाणां बहुत्वमेकत्वं वेति प्रश्ने ' बहवः पुरुषा लोके सांख्ययोगविचारणे ' इत्यनेन लोके ( व्यवहारे ) पुरुषबहुत्वं प्रतिपाद्य ' समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् ' इत्यनेन पुरुषैकत्वस्य पारमार्थकत्वमुक्तम् शान्तिपर्वणि ३५० अध्याये । एवं तत्रैव ३३४ अध्याये 'नारद उवाच पिता माता च सर्वस्य जगतः शाश्वतो गुरुः । कं त्वं यजसे देवं पितरं कर्म विद्महे ॥ श्रीभगवानुवाच—यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् । इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् । स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते । तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरव्यया । तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः । आवाभ्यां पूज्यते सोयं दैवे पित्र्ये च कल्प्यते' इति भगवन्नारदसंवादेन जीवब्रह्मणोरैक्यावगमात् जीवब्रह्मभेदपुरुषबहुत्वदर्शिपाञ्चरात्रविन्निन्दापराणि बोद्धव्यानि । एतदुक्तं भवति न तावत्स्मृतीनां स्वतःप्रामाण्यं किन्तु वेदमूलकतया तथा च श्रुतिविरोधे स्मृतीनामप्रामाण्यमिति वेदविरुद्धपाञ्चरात्राद्यागमस्याप्रामाण्यं स्थितम् महाभारते पाञ्चरात्रप्रामाण्यं तु अद्वैतपरत्वेनैव समर्थितं न तु द्वैतपरत्वेनेति सर्वं सुस्थम् । एकमेव पाञ्चरात्रशास्त्रं तदनुगामिनां भेदेन निन्द्यते स्तूयते चेति मन्तव्यम् ।

किंच पुराणेषु परिशीलितेषु मोहकत्वं विष्णोरेव न शिवस्येति

लभ्यते । तथाहि विष्णुर्मोहिनीरूपं धृत्वा दैत्यान् जलन्धररूपं धृत्वा तुलसीं बौद्धरूपं धृत्वा वैदिकान् वटुरूपं धृत्वा वृकासुरं च मोहितवान् शिवस्य तु नैवंविधा क्कापि कथा श्रूयते इति शिवस्य तामसत्वकथनं कियदर्थवदिति बुद्धिशत्रवो माध्वा एव विमृशन्तु ।

## शिवस्यैव परत्वम् ।

य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः । दक्षिणाङ्गेऽसृजत्पुत्रं ब्रह्माणं वामतो हरिम् ॥ पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजद्विभुः ॥ [ पाद्मे पातालखण्डे ] त्रयस्ते कारणात्मनो जाताः साक्षान्महेश्वरात् । [ शिवपु० वायुसंहिता ] इत्यादिपुराणवचनैः 'तमीश्वराणां परमं महेश्वरम्' 'एको रुद्रो न द्वितीयोवतस्थे' 'मायिनं तु महेश्वरम्' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत ।' इति श्रुतिस्मृतिभिः महादेवमहेश्वरेतियौगिकनाम्ना च शिवस्यैव परत्वम् । नच 'ईश्वरः सर्वभूतानामिति' वचने ईश्वरपदं श्रीकृष्णमेव विषयीकरोतीति वाच्यम् अग्रे 'तमेव शरणम्' इति परोक्तार्थकतच्छब्दनिर्देशेन कृष्णभिन्नस्यैव ईश्वरपदार्थत्वावगमात् । नच कृष्णभिन्नस्येश्वरपदार्थत्वे 'मन्मना भव' 'मामेव शरणं व्रज' इतिवचनविरोध इति वाच्यम् अत्रास्मच्छब्दस्य अहंपदाभिधेयप्रत्यगर्थाभिन्नमहेश्वरलक्ष्यीकरणायोक्तेः । एवमेव महेश्वरेण हतस्यापि कौरवसैन्यस्य 'मयैवैते निहताः' इति श्रीकृष्णोक्तिः समर्थनीया कौरवसैन्यं महेश्वरेण हतमिति तु द्रोणपर्वस्थार्जुनव्याससंवादादवगम्यते तथाहि—अर्जुन उवाच—तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् । भगवँस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ॥ शूलपाणिर्मयादृष्टस्तेजसा सूर्यसन्निभः ॥ व्यास उवाच—ईशानं वरदं पार्थ दृष्टवानसि शङ्करम् । तं गच्छ शरणं देवं वरदं भुवनेश्वरम् ॥ त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससम् ॥ इति । एवं शान्तिपर्वणि-( ३४२ अध्याये ) भगवानुवाच—ब्रह्मलोकं च कौन्तेय गोलोकं च सनातनम् । मया त्वं रक्षितो वीर महान्तं प्राप्तवान् जयम् ॥ यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युप-

स्थिते । तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ॥ निहतास्तेन वै पूर्वं हतवानसि यान् रिपून् ॥ इति ॥ न च कापालमोचनादिकथया विष्णोरेव परत्वमिति भ्रमितव्यम् । पुत्रार्थितया श्रीकृष्णस्य कैलासगमनं श्रीरामचन्द्रस्य भगवतो रावणविजयेच्छया रामेश्वरपूजनं विष्णुब्रह्मणोर्महत्त्वाकांक्षया शिवपार्श्वगमनं च शिवपरत्वे एव संभवतीत्यदोषात् अत एव कूर्मपुराणे ३० अ० 'नार्जुनेन समः शम्भोर्भक्त्या भूतो भविष्यति । मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥ इत्युक्तम् । क्वचिद्विष्णुपरत्वं च पुराणेषु श्रूयमाणं ब्राह्मणब्रुवाणां मोहनायेति मन्तव्यम् । मोक्षप्रदत्वस्य च विश्वेश्वरे पञ्चाक्षरोपदेशद्वारा सुप्रसिद्धमेवेति मोक्षप्रदत्वादपि शिवस्यैव परत्वमित्यलम् ।

## हरिहरयोरभेदः ।

वस्तुतस्तु हरिहरयोरभेद एव तथा च शिवपुराणम्— एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः ॥ प्रभावः कथ्यते तेषां परस्परसमुद्भवात् । महर्षिभिः प्रणीतानि विद्वांस्तत्र न मुह्यति ॥ अयं परोऽस्त्ययं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥ इति ॥ वेदानुवर्तिनं मार्गं देवं नारायणं तथा । एकीभावश्च पश्यन्तो मुक्ताश्चैव भवन्ति ते ॥ मां विष्णोर्व्यतिरिक्तं ये ब्रह्मणा च द्विजोत्तम । भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ॥ इति [ वाराह० ७० अ० ] अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥ [ हरिवंश ] विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च । कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥ [ भवि० ] सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः ॥ [ वि० पु० ] यो विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः । इति मत्वा भजेद्देवं स याति परमां गतिम् ॥ [ कौर्म ] न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च । ऋते आत्मा-

नयेवेति ततो ततो रुद्रं भजाम्यहम् [ म० शा० ३४१ ] इति वचनैर्ब्रह्म-विष्णुमहेश्वराणामेकमूर्तिकतया कः परः कोऽपर इति विचारः काक-दन्तपरीक्षावदुपेक्षणीय एव ।

न च 'यो मोहाद्विष्णुमन्येन हीनदेवेन दुर्मतिः। साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः' ॥ इति पाञ्चरात्रे, यो महादेवमन्येन हीनदेवेन दुर्मतिः। साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः ॥ इति स्कान्दे, 'यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनाऽभिजानाति सपाखण्डी भवेद्ध्रुवम्' ॥ इति सिद्धान्तरत्ने, पठितैर्वचनैर्विष्णुशिवयोः साम्यदर्शनस्य निषिद्धत्वमिति वाच्यम् आद्याभ्यां हीनदेवेनेतिपदघटिताभ्याम् इन्द्रादिभिरेव साम्यनिषेधप्रतीतेः, सिद्धान्तरत्नस्थस्य संप्रतिपन्नप्रामाण्यकत्वाभावात् । पूर्वोदाहृतवचनैर्हरिहरयोरैकत्वावगमेन भेदघटितसाम्यनिषेधद्वारा भेदनिषेध एवैषां तात्पर्याच्च ।

## स्मार्तसंप्रदायरहस्यम् ।

स्मार्तसंप्रदाय एव सनातनधर्मनाम्ना व्यपदिश्यतेऽयमेव च संप्रदायोऽनादिकालात्प्रवृत्तो बौद्धसमये किंचिद्विश्रृङ्खलो भगवत्पादशङ्कराचार्यैः परिरक्षित इति 'करिष्यत्यवताराणि शङ्करो नीललोहितः। श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ इति कूर्मपुराणादवगम्यते' अस्मिंश्च संप्रदाये विष्णुशिवगणपत्यादयो देवा अधिकारिभेदेन उपास्यतयाऽधिगम्यन्ते ये च पुराणे विष्णोः शिवस्य वा निन्दावादा ते सर्वेऽपि 'न हि निन्दा निन्दितुं किन्तर्हि विधेयं स्तोतुम्' इति न्यायेन तत्पुराणे विहितस्य शिवपूजनस्य विष्णुपूजनस्य वा प्रशंसार्थम् वस्तुतस्तु शिवो विष्णुश्चैकमेव तत्त्वमित्यनुपदमेवोक्तम्, व्यवहारदशायां च अद्वैतिभिः शिवकृष्णरामनृसिंहप्रभृतीनां पूजनं स्वीक्रियत एवेति अद्वैतसिद्धितत्त्वप्रदीपिकारत्नप्रभादिमङ्गलपद्यैः शिष्टाचारेण चावगम्यते । ऋषिभिश्च वेदानधिकारिणां कृते पुराणानि पाञ्चरात्राद्यागमाश्च प्रणीतानीति 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति भागवतपद्येनावगम्यते । एवं च पञ्चरात्राद्यनुसारेण पाशुपततन्त्रानुसारेण वा दीक्षितानां शङ्खाद्यङ्कनं त्रिशूलाद्यङ्कनं वाऽस्तु न कोऽपि

विरोधः वैदिकानां तु नोभयमप्यपेक्षितम् एवमूर्ध्वपुण्ड्रधारणे भस्मधारणे वा न कोऽपि विरोधोऽधिकारभेदेनोभयोरपि स्मृतिषु पुराणेषु च व्यवस्थापनात् । शिवविष्णवादिपूजनं च चित्तशुद्धिद्वारा तत्त्वज्ञानसंपादनेन मुक्तावुपयुज्यते न साक्षात् । शिवनिन्दया दक्षस्य सर्वस्वनाशः भृगोः श्मश्रुलुञ्चनं पूष्णोर्दन्तभङ्गः व्यासस्य भुजस्तम्भश्च इति एवं 'न धार्यं भस्मरुद्राक्षे न श्रोतव्या कथेशितुः । गङ्गापि शिवनिर्माल्यं न स्प्रष्टव्या कदाचने'ति वदतो वैष्णवापसदस्य कस्यापि राक्षसत्वप्राप्तिः शिवयोगिन उपदेशेन केदारलिङ्गदर्शनाद्राक्षसत्वनिवृत्तिश्च काशीकेदारमाहात्म्ये ५-६ अध्याययोरुक्ता तद्वत् केदारलिङ्गसन्निधौ केदारघट्टे निवासकरणात् काशीस्थविदुषामुपदेशाच्च माध्वस्यापि चार्वाकत्वनिर्मोकः स्यादिति मन्ये ।

## माध्वाद्वैतिनोः संवादः ।

माध्वः गङ्गादासः—भो अद्वैतविद्याचार्यगुरो अहं त्वयोपन्यस्तानि प्रमाणानि श्रुत्वा हेमाद्र्युक्तप्रायश्चित्तमनुष्ठाय शुद्धान्तःकरणः भवतः शरणमुपसन्नोऽस्मि पूर्वोदीरितमप्यद्वैततत्त्वं ब्रह्मद्वेषजनितपातकात् मच्चेतसि नागतमिति पुनः शिष्यं मां शाधि ।

अद्वैती—( गङ्गाधरशास्त्री ) वृद्धोक्ष ! नूनं शैलसारहृदयोऽसि ।

माध्वः—गुरो ! किमित्यधिक्षिपसि वृद्धोक्षेति तवापि चित्ते किमद्वैतरत्नमायाति ।

अद्वैती—नितरां मूर्खोऽसि न त्वमिवाहम् ।

माध्वः—गुरो ते शरणमुपगतः यथा मच्चित्तमद्वैताध्वनि प्रविशेत्तथा शाधि ।

अद्वैती—शृणु वत्स ! ईश्वरमुपास्व । ईश्वरानुग्रहादेषा पुंसामद्वैतवासना । महाभयकृतत्राणा द्वित्राणां यदि जायते ।

माध्वः—गुरो विषयाक्षिप्तचित्तत्वात् ईश्वरोपासनं मया कर्तुमशक्यम् ।

अद्वैती—अरे बालिश ! विषये दोषं पश्य ।

माध्वः—विषयदोषन्न द्रष्टुं शक्नोमीत्यतोऽपि सुगममुपायं वद ।

अद्वैती—स्मर तर्हि हरिं हरं वा।

माध्वः—सर्वदा भगवन्नामचिन्तनेऽप्यहमसमर्थः।

अद्वैती—अरे नूनमूषरात्मासि।

माध्वः—गुरो किं क्रुध्यसि अहं लोकसंग्रहपराणां हरिहरविद्वेषिणां संसर्गमवाप्य नितरां दूषितचित्तोऽस्मि भाग्येन भवन्तं शरणमुपगतः निरये पतन्तं मां रक्ष।

अद्वैती—शृणु वत्स! फलरागं त्यक्त्वा भगवदर्पणेन कर्माणि कुरु।

माध्वः—भगवन्नेवं करिष्यामि। आविर्भूतं मच्चिते दोषदर्शनं विषयेषु संप्रति शुद्धान्तःकरणः किमतः परं करवाणि।

अद्वैती—शृणु वत्स-गुरूपसदनं कुरु 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाधिगच्छेच्छ्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतेः।

माध्वः—भगवन् उक्तलक्षणो गुरुस्त्वमेव तन्मां ब्रह्मविद्यार्थिनमुपदिश। येनाहं निरतिशयानन्दं सर्वदुःखाभावोपलक्षितं लब्ध्वा कृतार्थो भवामि।

अद्वैती—शृणु वत्स! तत्त्वमसि महानुपदेशोऽयम्। श्रद्धत्स्व सौम्य!।

माध्वः—भगवन्नत्र को वा तत्पदार्थः कस्त्वमित्यस्यार्थः को वाऽसीत्यस्य।

अद्वैती—अद्वितीयं सच्चिदानन्दं ब्रह्म तदर्थः। अहमिति प्रत्यये भासमानो देहादिव्यतिरिक्तः सुखादिमत्त्वेन च भवत्प्रसिद्धस्त्वमर्थः उभयोः पदार्थयोरभेदो वाक्यार्थः। असीत्यनेन च तस्यैव सार्वदिककत्वं प्रतिपाद्यते। 'अखण्डं सच्चिदानन्दं महावाक्येन लक्ष्यते' इत्युक्तेः नानया श्रुत्या जीवब्रह्मणोरभेदः प्रतिपाद्यते किन्तर्हि ब्रह्मव्यतिरेकेणजीवाभाव इति।

माध्वः—भो गुरो भवत्कृपया—

पश्यामि चित्रमिव सर्वमिदं द्वितीयं।
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते॥

६

आत्मानमद्वयमचिन्त्यसुखैकरूपं ।
पश्यामि दग्धरसनामिव च प्रपञ्चम् ॥
यस्मात्कृपापरवशो मम दुश्चिकित्सं ।
संसाररोगमपनेतुमसि प्रवृत्तः ॥
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे ॥ इति ॥

माध्वेन चार्वाकतथागतार्हतादिदर्शनानां कदागमत्वेऽपि आवश्यकत्वं प्रदर्शयता स्वस्य चार्वाकत्वादिकमाविष्कृतम् एवमयमर्थक्रियासमर्थत्वरूपं सत्वमभ्युपगच्छन् स्वाप्निकस्येव जगतो मिथ्यात्वं तद्वद्वा स्वाप्निकस्य सत्यत्वं किमिति नाभ्युपैति आद्ये इष्टापत्तौ अद्वैतमतप्रवेशः द्वितीये लोकविरोधः ।

यच्च माध्वेनोक्तं 'मन्मते वर्णाश्रमादयः सत्या' इति तदसत् 'नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो, नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा । किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धेर्गोपीभर्तुः पदकमलयोर्दासदासानुदासः' इति त्वदीयश्रीगौराङ्गमहाप्रभुवचनेन त्वन्मते वर्णासत्याया अभावात् ।

यच्च 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' 'अनुपपत्तेस्तु न शारीरः' इतिसूत्रैर्भेदो जीवेश्वरयोः प्रतिपाद्यते इति तत्सत्यं प्रतिपाद्यते परन्तु व्यावहारिक एव न पारमार्थिकः 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्कि केन पश्येदि'ति श्रुतेः पारमार्थिकभेदनिषेधात् । एतेन भेदपराः श्रुतिस्मृतयो विष्णुसहस्रनामशाङ्करभाष्यादयोऽपि व्याख्याताः ।

यच्च जीवब्रह्मैक्यस्य परेशजीवयोरैक्यमित्यनेन निन्दितत्वमिति तन्न परेशजीवयोरैक्यं मया तु प्रतिपाद्यते ब्रह्मणोऽस्य स्वयं रूपं निर्गुणमित्यन्तमेकं वाक्यं वक्ष्यते तथा कलौ युगे मध्वरूपेण मोहनार्थमित्यपरं वाक्यमित्यनेन भेदस्य निन्दितत्वेऽप्यैक्यस्य निन्दितत्वाभावात् ।

यच्च ब्रह्मणो निर्गुणत्वबोधिकाः श्रुतयः हेयगुणाभावपरा इति तदसत् 'प्रतियोगिविशेषिताभावज्ञाने च विशिष्टवैशिष्ट्यबोधमर्यादां

नातिशेत' इति न्यायेन घटो नास्तीत्यस्य।घटत्वावच्छिन्नप्रतियोगिताकाभावबोधकत्वस्येव निर्गुणमित्यस्यापि गुणत्वावच्छिन्नप्रतियोगिताकाभावबोधकत्वस्यैव न्याय्यत्वात्सगुणश्रुतयस्तु उपासनाविधिशेषतयोपयुज्यन्त इत्यलम् ।

प्रच्छन्नजैनस्य मुरारिचिन्ताव्याजेन यज्ञं सुनिराकरिष्णोः ।
माध्वस्य लोकायतदर्शनं तत्कव्यान्मुखोच्छिष्टमिदं विदन्तु ॥
यो नीलशृङ्गाऽङ्कितभालदेशो माध्वः श्रुतीः संचरितुं प्रवृत्तः ।
स एष सन्मामकयुक्तियष्ट्या मुखस्य भङ्गेन पलायितोऽगात् ॥

श्रुतिसस्यानि चरितुं व्यध्वो मध्व उपेयिवान् ।
तेषां संरक्षणात्कोऽपि देवो मे सुप्रसीदताम् ॥

इति न्यायव्याकरणाचार्यसूर्यनारायणशुक्लसंपादिते
माध्वमुखभङ्गे प्रथमा यष्टिः ।



# काशीखण्डस्था शिवस्तुतिः ।

भगवान्वेदव्यासः काशीमागत्य शिवं निन्दन् शिष्यैः सह भुजमु-त्थाप्य ननर्तेति नन्दीश्वरकोपेन भुजस्तम्भदुःखमनुभवन् विष्णुप्रेरितः शिवस्तुतिं चकार । तद्यथा—

व्यास उवाच ।

एको रुद्रो न द्वितीयो यतस्तद्ब्रह्मैवैकं नेह नानास्ति किंचित् ।
यद्यस्त्यन्यः कोपि वा कुत्रचिद्वा व्याचक्ष्वां तद्यस्य शक्तिर्मदग्रे ॥ १ ॥
यः क्षीराब्धेर्मन्दराघातजातो ज्वालामाली कालकूटोऽतिभीमः ।
तं सोढुं वा कोऽपरोऽभून्महेशाद्यत्कीलाभिः कृष्णतामाप कृष्णः ॥ २ ॥
यद्बाणोऽभूच्छ्रीपतिर्यस्य यन्ता लोकेशो यत्स्यन्दनं भूः समस्ता ।
वाहा वेदा यस्य येनेषुपाताद्दग्धा ग्रामास्त्रैपुरास्तत्समः कः ॥ ३ ॥
यं कन्दर्पो वीक्षमाणः समानं देवैरन्यैर्भस्म जातः स्वयं हि ।
पौष्पैर्बाणैः सर्वविश्वैकजेता को वा स्तुत्यः कामजेतुस्तदन्यः ॥ ४ ॥
यं वै वेदो वेद नो नैव विष्णुर्नो वा वेधा नो मनो नैव वाणी ।
तं देवेशं मादृशः कोऽल्पमेधा याथात्म्याद्वा वेत्त्यहो विश्वनाथम् ॥ ५ ॥
यस्मिन्सर्वं यस्तु सर्वत्र सर्वो यो वै कर्ता योऽविता योऽपहर्ता ।
नो यस्यादिर्यः समस्तादिरेको नो यस्यान्तो योऽन्तकृत्तं नतोऽहम् ॥ ६ ॥
यस्यैकाख्या वाजिमेधेन तुल्या यस्यानत्या चैकयाल्पेन्द्रलक्ष्मीः ।
यस्य स्तुत्या लभ्यते सत्यलोको यस्यार्चातो मोक्षलक्ष्मीरदूरा ॥ ७ ॥
नान्यं देवं वेद्म्यहं श्रीमहेशान्नान्यं देवं स्तौमि शम्भोर्ऋतेऽहम् ।
नान्यं देवं वा नमामि त्रिनेत्रात्सत्यं सत्यं सत्यमेतन्मृषा न ॥ ८ ॥
इत्थं यावत्स्तौति शम्भुं महर्षिस्तावन्नन्दी शाम्भवाद्दृक्प्रसादात् ।
तद्दोःस्तम्भं त्यक्तवाँश्चावभाषे स्मार्यं स्मार्यं ब्राह्मणेभ्यो नमो वः ॥ ९ ॥